शशनभवति केत्याह द्वितीयेसास्वादने तृतीयेमिश्रदृष्टौ सासाणमिस्स रहिसुसाति यमिनिरचनात् सासादनामिश्रयो समचत्वारिंशशतभवति इरमतहृदय इहमिथ्यादृष्टेरष्टचत्वारिंशमपिशतसत्तापा ॥ यत्राह । प्राग्बद्धनरकायु क्षयोपशमिकसम्यक्त्वमवाप्यतीर्थंकरनामारब्धवते तदासौनरकेषूत्पद्यमान सम्यक्त्वमवश्यवमति तेनमिथ्यादृष्टेस्तीर्थंकरनामोऽपिसत्तागमभवति पुन पूर्वअप्रमत्तादिपुगतस्याहारकद्विकबद्धस्येति । अत्रायुश्चतुष्टयतुबहुजीवापेक्षया सासान्नामिश्रयोस्तुतस्मिरेरजिननामरहितेसमचत्वारिंशशतसत्तायाभवति जिननामसत्कर्मणोजीवस्यतद्भावानवामे स्तद्भावभस्यच गुन्द्रसम्यक्त्वन श्र हत्कर्मस्तवभाष्येप्युक्त नित्यपरेणविहीण सीपालसयतुसनण्डोइ सासायणम्मिउगुणे सम्मामीसेयपयडीण १ अविरतसम्यग्दृष्ट्यादीनाअष्टिमदर्शनसप्तकानाअष्ट चत्वारिंशशतसत्तापाभवति केषामि याह उवसमेत्तिउपशमसम्यक्त्वअनाउपशमश्रेणिचारित्रमोहोपशमरूपाश्रेणि यथानुक्रमोत्तरोत्तरगुणारोहरूपामपनानामेवभवति पूर्वमप्रमत्तादिष्वोहारकादिक्तसत्ताक्षयोपशमश्रेणिवनोभवति ॥ २६ ॥

टबार्थ—हवे उत्तर कर्मनी सत्ता कहे छे पूरुनो अने अटतालीस उत्तर प्रकृतिनी सत्ता ठे इग्यारमा गुणठाणा सुधी बीजे सास्वादन गुणठाणे अने त्रीजे मिश्र गुणठाणे जिन नामनी सत्ता नथी तेणे एकसोसडतालीसनी सत्ता छे ए उपसम समकितवत जे जीव छे, पहीला सातमा पर्यंत चढता होये तेहने एकसो सडतालीसनी सत्ता थाये अनादि मिथ्यात्व जीव प्रथमथी समकित पामे । तेहने जिन नामनी १ आहारक १नी सत्ता वंध करे पछी होये पर प्रथम तीन होये । ए उपसम श्रेणि चडतो जीवनी सत्ता जांणवी ॥ २६ ॥

इगचत्तससयसता, खायगसमत्तसतसेढीण ॥
अडतीससयनरमे, खवगसेढीपवन्नाण ॥ २७ ॥

टीका—अथवात्रकश्चिद्विसयोजिनानुबंधिचतुष्कस्ततमत्यय-जन्यनरकतिर्यगायुयोग्यस्तत्र बद्धदेवायुर्मनुजायुषिवर्त्तमान क्षयोपशमसम्यक्त्वचारित्रशाद्धाद्धाहारकादिरुपशमश्रेणिमारोहति तस्य-तिर्यगायुर्नरकायुरनतानुबंधिचतुष्टयलक्षणप्रकृतिपट्करहितशेषद्विचत्वारिंशशतसत्तायामाप्यते ॥ यदुक्तं बृहत्कर्मस्तवभाष्ये ॥ अणतिरिनारयरहीअ नायाल्सयवयाणसनम्मि उवसामगसमपु व्वा तिपट्ठिसुहुमोवसतम्मि । १ । य कश्चिज्जीव क्षयोपशमसम्यग्दृष्टि विशुद्धा यवसायवलेनकारणापत्रादमार्गसापेक्षोपियथार्थगुरूतत्त्वभावर्मकार्यात्सर्गश्रद्धानुभवलीन तेनैकाग्रनाप्रात्पवीर्येणक्षयीकृतानुबंधिचतुष्कमिथ्यात्वमिश्रसम्यक्त्वमोहलक्षणसप्तकस्तस्योपशमश्रेणिगतस्यापि एकचत्वारिंशशतसत्तायाभवति यावदुपशातमोहगुणस्थानकतावत्क्षायिकसम्यक्त्वोपशमश्रेणिस्थानाजीवानामेवभवति अथवा पूर्वबद्धायुः पश्चात्क्षयोपशमीभूयक्षायिकसम्यग्दृष्टिर्भवति तस्यसप्तकक्षयेणैकचत्वारिंशशतमेवसत्ताया य पुन मनुष्य क्षपकश्रेण्यारोहायुक्तस्तस्यनरकतिर्यग्देवायुप सत्ताभावात् वेद्यमानरायुस्तत्सत्ताकत्वतेनअविरतिगुणस्थानात्दर्शनसप्तकायुस्त्त् (स्तूद) याभावात् अनिवृत्तिबादरप्रथमभागयावत् अष्टत्रिंशत्शतसत्तायाभवति ॥ २७ ॥

टबार्थ—जे जीव पहेला क्षयोपसमकित होइ ते जीवने परिणामनि विशुद्धता थाये । अननानुबंधी ४ मिथ्यात्व मोहिनी १ समकित मोहिनी १ मिश्र मोहिनी १ एवं सात प्रकृति क्षय करे । तेहने एकसो एकतालीसनी सत्ता थाये

ते चोथाथी माडी इग्यारमा पर्यंत १४ नी सत्ता होये, ए जीव क्षायिक समकिनी उपसमश्रेणि छे तेहने इम होये इम क्षपक श्रेणि पडिवज्या जीवने प्रथमथी नारकी १ तिर्यंच १ देवता १ नी गतिना आऊषा टाले, तेवार पछी अनतानुबंधी ४ दर्शन मोहिनी ३ एव दश खपावे तेवारे चोथाथी माडी नवमा गुण ठाणाना नव भाग छे। तेहने पहिले भागे एकसो अडतीसनी सत्ता छे। इहा कोइ पूछे जे तीन सत्ता तो कोड जीवने न होइ तो खपावे किहाथी? तेहनो उत्तर जे परिणामे आऊपानो बंध थाये एहवा परिणामनी योग्यता टाले तेहनी क्षेपणा गवेषी छे, बीजे भागे एकसो बावीसनी सत्ता छे, तीजे भागे एकसो चउदनी सत्ता छे, चोथे भागे एकसो तेरनी सत्ता छे, पाचमे भागे एएकसोबारनी सत्ता छे, छठे भागे एकसोछनी सत्ता छे, सातमे भागे एकसोपाचनी सत्ता छे आठमे भागे एकसोचारनी सत्ता छे नवमे भागे एकसोतीननी सत्ता छे ॥२४॥

**दुसयसुहुमेखीणे, इगसयननवईसत्तपयडीउ ॥**
**पणसी(ह)सयोगीअयोगी, तेरसखवीउणसिज्झति२८**

टीका—द्वितीयभागेतुस्थावर १ सूक्ष्मद्विक २, तिर्यग्गति १, तिर्यगानुपूर्वीलक्षणद्विक नरकगतिनरकानुपूर्वीलक्षण २, आतपोद्योतद्विक २, स्त्यानर्द्धित्रिक ३, एकेंद्रियजातिचतुष्क ४, साधारणनामलक्षणप्रकृतिषोडशकतिर्यग्नरकग तिनैमित्तिकसचायाक्षीयते सदाद्वाविंशशतसत्तायाभवति तृतीयभागेअप्रत्याख्यानप्रत्याख्यानकषायाष्टकक्षीयते तदाचतुर्दशशतसत्तायाभवति नपुंसकवेदे

क्षीणेनयोदशशतसत्तायात्र्येभागेभवति तत स्त्रीवेदेक्षयेपचमेभागेद्वादशशतसत्तायाभवति ततोहास्यषट्कक्षयेषष्ठे भागेषटधिकशतसत्तायाभवति तत पुरुषवेदक्षयेसप्तमेभागेपञ्चाधिकशतभवति सत्ताया तत सज्वलनक्रोधेक्षीणेअष्टमेभागेचतुरधिकशतभवति सत्ताया तत सज्वलमानाभावेनवमेभागेत्र्यधिकशतसत्तायाभवति पुरुषप्रतिपत्तेरयक्रम अथस्त्रीप्रारभिकातत्प्रथमनपुसकवेदनत पुरुषवेदततोहास्यषट्कतत स्त्रीवेदअथनपुसक प्रारभकस्ततोऽसो अनुदीर्णमपिप्रथमस्त्रीवेदक्षपयति तत पुरुषवेदतत षट्कततोनपुसकवेद तत सज्वलनत्रिक इत्येवक्रमतोनेय अनिवृत्यतसमये सज्वलनमायाक्षयेदशमेसूक्ष्मसपरायाख्येगुणस्थाने द्व्यधिकशतसत्तायाभवति क्षपकस्येकादशेअगमनात् क्षीणेक्षीणमोहाख्येगुणस्थानेसज्वलनलोभस्यसूक्ष्मसपरायातेक्षपणादेकाधिकशत प्रथमेभागे क्षीणमोहेभवति ततोनिद्राद्वयक्षयगतेक्षीणमोहस्यद्वितीयेभागेनवनवति सत्तायाभवति क्षीणमोहेचरमसमयेज्ञानावरणीयपचकमतरायपचकदर्शनावरणचतुष्टयक्षपयित्वासयोगिकेवलीगुणस्थानेपचासीतिसत्कर्माभवति अयोगिद्विचरमसमययावत पचासीतिसत्तायाभवति अयोगिचरमसमयात्पूर्वसमयेद्वासप्तति क्षपयतिताएवदर्शयति देवद्विकदेवगतिदेवानुपूर्वीलक्षणस्वगतिद्विक शुभाशुभविहायोगतिरूपगतिद्विकस्पर्शाष्टकवर्णपचक रसपचकतनुपचक बधनपचक सघातनपचक सहननषट्क सस्थानषट्क अस्थिरषट्क अगुरुलघु १ उपघात १ पराघात १ उच्छ्वास १ निर्माण १ पचक अपर्याप्तनामप्रत्येकत्रिक पाउगत्रिक सातासातरूप एकतरवेदनीय सुस्वरनीचैर्गोत्रमितिद्वासप्ततिर्क्षीयते ततोऽयोगिचरमसमयेत्रयोदशसत्तायाभवति मनानरेमनुजानुपूर्व्यमिअत्रैवक्षीयते अत्रमनुजानुपूर्वी कर्मण भिन्नोदयोनास्ति स्तिबुकसक्रमस्यापिअत्राभावात् प्रदेशप्रद-

नाभानेचाक्षयात् अत ततोपूर्वमेवमनुजगतिकयश आदेयसुभग-जिननामउच्चैर्गोत्रपचेन्द्रियजाति सातासातयोरेकतरवेदनीयएताख-योदश मनुष्यानुपूर्व्यीमनरेणत्रादशचरमसमयेक्षपयित्वासिद्धिमाप्नो-तिजीव अप्ययममूर्त्तोखटायानाधारयतिकैकातिकनिर्द्वद्वनिरामपल-क्षणामिति ॥ २८ ॥

टवार्थ —सूक्ष्मसपरायगुणठाणे एकसोवेनी सत्ता छे, खीण-मोहगुणठाणे बारमे पहिले भागे एकसो एकनी सत्ता छे तेहने निद्रा २ गये नवाणुनी सत्ता वीजे भागे छे । ज्ञानावरणी ५ दर्शनावरणी ४ अतराय ५ ए खपे तेवारे तेरमे तथा चउदमे गुणठाणे पचासीनी सत्ता छे ते चउदमाना छेला वे समय रहे तेवारे बोंतेर प्रकृति खपे तेवार छेहले समये तेर प्रकृ-तीनी सत्ता रहे ते तेर प्रकृति अयोगीचरमसमये खपाविने सिद्ध थाये ॥ २८ ॥

## खीणजासत्तसा नाणा, वरणतरायएपच्च ।
## वेयणीयगोअकम्मे, दुगदुगसत्ताअयोगिंता ॥२९॥

टीका--अथसत्तास्वामित्वमाह ॥ खीणजाइति २९ क्षीण-मोहगुणस्थानकयावत्ज्ञानावरणातरायपचकसत्तायाभवति वेदनीय-गोत्राख्यद्विकद्विकसत्तायाअयोगिगुणस्थानकयावद्भवति प्रथमभा-गातएकैकस्यसत्ताभवति ॥ २९ ॥

टवार्थ —खीणमोह बारमा गुणठाणासीम ज्ञानावरणीनी पाच प्रकृतिनी सत्ता छे, अतरायनी पाच प्रकृतिनी सत्ता छे, वेदनी कर्मनी बे प्रकृतिनी सत्ता छे, गोत्रकर्मनी बे प्रकृतिनी सत्ता

छे अयोगीना प्रथम भाग पर्यंन छे छेहले भागे तेर रहे ते-
वारे एक वेदनी तथा एक गोत्रनी सत्ता रहे छे ॥ २९ ॥

## वीएउवसतता, नवखवगाणतुवायराओछग।
## खीणेछचउसता, मोहेअडवीसउवसते ॥३०॥

टीका—वीएउवसनताइति द्वितीयेदर्शनावरणीयाख्येकर्मणि-
उपशातमोहातनवानामिमकृतीनासत्ताभवति क्षपकानातुअनिवृत्ति-
प्रथमभागपर्यंननवानामपिदर्शनावरणप्रकृतीनासत्ताभवति प्रथम-
भागातषोटशापगमात्परेस्त्यानर्द्धिनिकाभावेनन परक्षीणमोहप्रथम-
भागयावनूदर्शनावरणीयस्यषट्प्रकृतीनासत्ताभवति क्षीणमोहस्यच-
रमसमयेदर्शनावरणीयचतुष्टयंभवसत्तायाभवति "खीणदुचरिमेगसय-
दुनिदृक्खओ" इतिवचनात् तन पञ्चदर्शनावरणीयमतानभवति अथ
मोहनीयकर्मण सत्तास्वामित्वमुच्यतेमोहनीयेकर्मणिउपशमसम्यक्त्वो-
पगमचारिनवन उपशमश्रेणिगनस्यउपशातमोहगुणस्थानकयावत्
अष्टाविंशतिप्रकृतय सत्तायासभवति कृतनिपुजएवानग्राग्र अकृ-
तनिपुजस्यानपेक्षैवग्रथिभेदकालेप्रथमकृतनिपुजीक्षयोपशमसम्यक्त्व-
लभते अकृतनिपुजीतुउपशमसम्यक्त्वलभते इतिसिद्धाताशय कर्म-
ग्रथिकास्तुकृतनिपुजीअकृतनिपुजीर्जावोपिप्रथमउपशमसम्यक्त्वमे-
वलभतेइतिवदति ॥ ३० ॥

टवार्थ—वीजे दर्शनावरणा कर्म्मे उपशमश्रेणिने उपसात-
मोहगुर्णटाणासीम नवनी सत्ता छे। क्षपकश्रेणिने नवमा गुण-
ठाणाना वीजे भागे सोल प्रकृति खपे तेवारे थीणद्धी तीन
खपे छे तेहने छ प्रकृतिनी सत्ता रहे छे दर्शन ४ निद्रा २
ने खीणमोहगुणटाणे पहिले भागे दर्शनावरणी छनी सत्ता छे

बीजे भागे निद्रा २ क्षय करे तेवारे दर्शनावरणी च्यारनी सत्ता छे बारमाने अंते दर्शनावरणी ४ सत्ता खपे छे मोहनीकर्मनी उपसमसमकित उपसमचारित्रीयाने इग्यारमा गुणठाणा पर्यंत अठावीशनी सत्ता छे ॥ ३० ॥

## अविरईसमत्ताओ, इगवीसउवसमम्मिसतसा ॥ खवगम्मियइगवीस, तेरसबारसइगारच ॥३१॥

टीका—अविरयेत्यादि वाइतिपक्षांतरेइत्यनेनक्षायिकसम्यक्त्वे उपसमश्रेणिस्थस्यअविरतसम्यगगुणस्थानकात् आरभ्यएकादशयावत्दर्शनसप्तकविनाएकविंशतिमोहप्रकृतिनासत्ताभवति खवगम्मि क्षायिकसम्यक्त्वक्षपकश्रेणिस्थस्यप्रथममनंतानुबंधिचतुष्कदर्शनत्रिकेक्षीणेअविरतसम्यक्त्वगुणस्थानतोऽप्रमत्तयावत्मोहनीयस्यकविंशति सत्ताभवति ततोकषायाष्टकेक्षीणेऽनिवृत्तिबादरतृतीयभागेमोहनीयस्यत्रयोदशसत्ताभवति ततोनपुंसकेक्षीणेद्वादश स्त्रीवेदेक्षीणेएकादश ॥ ३१ ॥

टबाथ—तथा क्षायिकसमकिती उपसमश्रेणीने चोथा अविरति गुणठाणाथी मांडीने इग्यारमा उपशांत मोह गुणठाणा पर्यंत च्यार कषाय नवनो कषाय एकवीसनी सत्ता छे उपसमभावे मोहनीनी प्रकृतिनो उदय नथी तेवारे परसत्ताथी काढी नसके ए रीत छे । हवे क्षपकश्रेणिने प्रथमथी अनंतानुबंधी ४ दर्शनमोहिनी तीन खपे तेवारे एकवीसनी सत्ता छे पछी आठ कषाय खपे तेवारे तेरनी सत्ता छे, पछी नपुंसकवेद खपावे तेवारे बारनी सत्ता छे, पछी स्त्रीवेद खपावे तेवारे इग्यार प्रकृति मोहीनानी सत्ता छे ॥ ३१ ॥

**पचयचउतिदुइग, सत्तठाणाणिमोहसत्तम्मि ॥**
**सुहुमज्जआउकम्मे, चउसत्ताअपमत्तज्जा ॥३२॥**

टीका—हास्यषट्कक्षयेपच पुरुषवेदक्षयेचतस्र सज्वलनलो-भस्यक्षयेतिस्र सज्वलनमानक्षयेद्वो सज्वलनमायाक्षयेएका स-ज्वलनलोभप्रकृतिक्षयेसत्ताभावोमोहस्यसूक्ष्मसपरायपावत् मोह-नीयसत्ताक्षीणमोहादौतुनेति सत्तास्थानानामोहसत्तायासूक्ष्मस-परायपावद्भतिसमय आयु कर्मणिअप्रमत्तयावत् चतुर्णामपिसत्ताभ-वति प्रसंगद्वापेश्चवति ॥ ३२ ॥

टबार्थ—पछे हास्यादिक खपावे तेवार मोहिनाने पांच प्रकृतिनी सत्ता छे, ते मध्येथी पुरुषवेद खपावे तेवारे मोहि-नीनी च्यार प्रकृतिनी सत्ता छे, पछी सज्वलनो क्रोध खपावे तेवार आठमे भागे तीन प्रकृतिनी सत्ता छे, ते सज्वलनोमा बे प्रकृतिनी सत्ता छे पछी सज्वलनी माया खपावे तेवारे दशमे सूक्ष्म सपराय गुणठाणे एक लोभनी सत्ता छे दशमाने अंते ते पिण खपावे ते अमोही थाये ए दशमा गुणठाणा पर्यंत क्षपकश्रेणिवालाने मोहिनी कर्मनी सत्ता छे, बारमो खीणमोही छे आऊखा कर्मनी अप्रमत्त गुणठाणा पर्यंत च्यार आऊखानी सत्ता छे, पर्व आऊखो बाध्यो होय तेमाटे उपशमश्रेणे जीवने च्यार आऊखानी सत्ता कही ते योग्यतानी छे, उपशमश्रेणिवालो पूर्व आऊखो बांधी पछी श्रेणि चढे ॥ ३२ ॥

**चउदुगइगसत्तता, खीणाओग्गसतनाममि ।**
**तिनवईउवसत्तता, अस्सीइक्खवगेनवअयोगि ॥३३॥**

टीका—तत्र परउपशमश्रेण्यावर्तमानानानाजीवविर्ज्जीवानापूर्व-बद्धायुषाएकादशयावत्चतुर्णामपिसत्ताभवति मित्रजीवापेक्षमिद-वाक्य अथवाकश्चिन्मनुष्योदेवायुर्बध्वाउपशमश्रेणिमारोहते तस्यमु-ज्यमानमनुजायुरभिनवबद्धदेवायुरितिद्वयो सत्ताभवति पुनर्य औपश मिकसम्यग्दर्शनीअवद्धायुरेवोपशमश्रेणिमारभते तस्यभुज्यमाननरा-युषनसत्ता(या)भवति क्षीणाओइति,क्षायिकसम्यग्दर्शनीक्षपकश्रेणिमा-रोहतितस्यैकमेवमनुजायु सत्तायाभवति नाम्निति नामकर्मणिउपशम-श्रेणिस्थस्यउपशांतमोहयावत् अनेकजीवापेक्षयानिनवति सत्तायामा-प्यतेक्षपकश्रेणिमारूढस्यनवमगुणद्वितीयभागेत्रयोदशनामप्रकृतिक्षये अशीतिरेवसत्तायायावदयोगिद्विचरमसमयेतावद्भवति अयोगिचरम-समयेनवनामप्रकृतीनासत्ताभवति तत्सत्ताक्षयेजीव सिध्यतिसकल-प्रदेशपुद्गलकर्माशेषरहितश्चभवति इतिश्रीदेवचन्द्रगणिविरचितायां स्वोपज्ञविचारसारटीकायांसत्ताधिकार सत्ताकर्म पार याकरणेजीवस्व-भावविजानेसत्ताकर्मविमुक्ता भवतुर्जीवा सदाजिना ॥३३॥

टवार्थ—चारे आऊखानी सत्ता भिन्न जीव अपेक्षाये होये आऊखा बान्ध्या विना उपशम श्रेणि माडे तेहने एक वर्तमान मनुष्यायु सत्तामा होये ए रीते पण होइ क्षपकश्रेणि जीवने चोथाथी माडी चउदमा पर्यंत एकज मनुष्यायु सत्तामा होय हवे नाम कर्मनी सत्ता गुणठाणे कहे छे उपशमश्रेणिनी अ पेक्षाइ सामान्य अनेक जीवने नाम कर्मनी त्राणु प्रकृति सत्तामा छे अने क्षपकश्रेणिने नवमा गुणठाणाना पहिला भाग पर्यंत त्राणुनी सत्ता छे पछी बीजे भागे सोलरखपावे तेवारे तेर नाम कर्मनी खपे तेवारे तेरमा गुणठाणा पर्यंत ऍसीनी सत्ता छे पछी चउदमाने छेहले भागे तिऊत्तरखपावे तेवारे अयोगी हैने छेहले भागे नवनी सत्ता रहे छे ॥३३॥

**सव्वजीयठाणमिच्छे, सगसासाणेपणअपज्जसन्निदुग।**
**सम्मेसन्निदुविहो, सेसेसुसन्नीपज्जत्तो ॥३४॥**

टीका—अथगुणस्थानेषुजीवस्थानानिकथ्यते इहसूक्ष्मबादरे गिंदीबितिचउअसन्निपचेंदि अपजत्तापज्जत्ता कमेणचउदसजीअठाणा १, इहास्मिन्जगतिसंक्षेप यार यायासंग्रहनयेन एगेआया इतिएकएवजीवभेदोमध्य यार यायाविशुद्धनगमआस । यवहारनयेन-चतुर्दशजीवस्थानानिकेनक्रमेणेतिचेदित्याह सूक्ष्मबादरेकेंद्रियद्विचतुरसंज्ञिसंज्ञिपचेंद्रियाइनिसप्तएतेसप्तअपर्याप्तपर्याप्तभेदाच्चतुर्दशएकस्पर्शनलक्षणमिंद्रियंयेषांतेएकेंद्रिया पृथ यपतेजोवायुवनस्पतय तेच प्रत्येकद्वेधासूक्ष्मा बादराश्चतत्रसूक्ष्म नामकर्मोदयात्सूक्ष्मा सकल-लोक यापिन बादरनामकर्मोदयाद्बादरास्तेचलोकप्रतिनियतदेशवर्तिन द्वेस्पर्शनरसनलक्षणेइंद्रियेयेषांतेद्वीन्द्रिया कृमिपूतरकादय त्रीणिस्पर्शनरसघ्राणरूपाणिइंद्रियाणियेषांतेत्रींद्रिया कुथुमत्कूणयूकादय चत्वारिस्पर्शनरसनघ्राणचक्षुलक्षणानिइंद्रियाणियेषांतेचतुरिंद्रिया भ्रमरमक्षिकामशकवृश्चिकादय पचस्पर्शनरसनघ्राणचक्षु श्रोत्रलक्षणानिइंद्रियाणियेषां ते पचेन्द्रिया मत्स्यकलभसारसुरनारकमनुष्यादय तत्रतिर्यग्मनुष्यपचेन्द्रियाद्विविधासज्ञिन असज्ञिनश्चतत्रसज्ञानसंज्ञा भूतभवद्भाविभावस्वभावपर्यालोचनदीर्घकालिकीसंज्ञायासासंज्ञाविद्यते येषांतेसंज्ञिन विशिष्टस्मरणादिरूपमनोविज्ञानभाजइतियावत् तद्विपरीता स्त्वसंज्ञिनोमनोविज्ञानविकलाइत्यर्थ एतेचप्रत्येकद्विधापर्याप्तकाअपर्याप्तकाश्च पर्याप्तिनामपुद्गलोपचयज पुद्गलग्रहणपरिणमनहेतुशक्तिविशेष साचविषयभेदात्षोढा आहारपर्याप्ति शरीरपर्याप्ति उच्छ्वासपर्याप्ति भाषापर्याप्ति मन पर्याप्तिरिति-

तनयथालोमादिआहारमादायखलरसरूपतयापरिणामयति साआहारपर्याप्ति यथारसीभूतमाहारशरीरतया परिणामयति साशरीरपर्याप्ति येचपुद्गला शरीरतयापरिणमय्यइन्द्रियाकारसहायत्वयापरिणामयन्तिसा शरीरपर्याप्ति यथाउच्छ्वासानुगशक्तिविशेषयापुनरुच्छ्वासप्रायोग्यवर्गणादलिकमादाय उच्छ्वासरूपतया परिणमय्यालम्ब्य च मुचति साउच्छ्वासपर्याप्ति यथानुभाषायोग्यवर्गणाद्रूपगृहीत्वाभाषात्वेनपरिणामय्यालम्ब्यवचनरूपतयामुचतिसाभाषापर्याप्ति यथापुनर्मनोयोग्यवर्गणादलिकगृहीत्वामनस्त्वेनपरिणमय्यालम्ब्यचिनन यापारकृत्वामुचतिसामन पर्याप्ति एताश्चयथाक्रममेकेन्द्रियाणाविकलासज्ञिनातथासज्ञिनाचतु पचषट्संख्याभवन्ति स्वस्वयोग्यपर्याप्तिपरिसमाप्तापर्याप्तका तदपरिसमाप्तिविकलास्तेऽपर्याप्तका तेऽपर्याप्तकाद्विधालब्ध्याकरणेश्चयेचाहारशरीरेन्द्रियपर्याप्तिनिष्पाद्यम्रियते तेलब्धिऽपर्याप्तका येचाहारशरीरेन्द्रियाणिनिष्पादितानि शेषा स्वयोग्या पर्याप्तय निष्पादयिष्यन्तितेकरणापर्याप्तका इतिसर्वजीवस्थानसिद्धे इत्यादिसर्वाणिजीवस्थानानिचतुर्दशाऽपिमिथ्यादृग्गुणस्थानकेभवन्ति सगत्ति सप्तजीवस्थानानिसास्वादनेभवन्ति पचापर्याप्ता बादरकेन्द्रियाऽपर्याप्ता द्वीन्द्रियाअपर्याप्ता त्रीन्द्रियाअपर्याप्ता ३ चतुरिन्द्रियाअपर्याप्ता असज्ञिपचेन्द्रियाअपर्याप्ता ५ सज्ञिद्विकसज्ञिअपर्याप्तपर्याप्तलक्षण केतत्रापर्याप्तकाश्चेहकरणापर्याप्तकाद्रष्टव्या नतुलब्धिअपर्याप्तकास्तेषुमध्येसास्वादनसहितस्योत्पादाभावात् भावनाचकश्चिदेवादिगतोजीव प्रथमपृथिवीकायादिकआयुर्बध्यातत परग्रन्थिभेदसमयउपशमसम्यक्दर्शनमवाप्यसासादनगतआयु क्षयेएकेन्द्रियोभवति तस्योत्पत्तिकालेसभाव्यते विकलेन्द्रियासज्ञिनातुतिर्यग्मनुष्यतस्तेयत्रमृतस्यसभाव्यते सम्मे अविरतिसम्यग्दृष्टिगुणस्थानेसज्ञीद्विविधोऽपर्याप्तरूपोद्रष्टव्य इहापर्याप्तकरणापेक्षयाज्ञेयो नतुलब्ध्यप-

र्याप्तक सम्यग्दृष्टिर्भवतिशेषेषुमिश्रदेशविरत्याद्ययोगिपर्यंतेषुगुण-स्थानकेषुसज्ञीपर्याप्तलक्षणमेकजीवस्थानप्राप्यते इति याख्यातानि गुणस्थानकेषुजीवस्थानानि ॥ ३४ ॥

टबार्थ —हवे गुणठाणाने विषे जीवना भेद कहे छे मि-थ्यात्व गुणठाणे सर्व चउद भेद जीवना छे सास्वादन गुणठाणे अपर्याप्ता पाच बादर अपर्याप्तो १, बेंद्रीअपर्याप्तो १, तेंद्रीअप-र्याप्तो १, चौरिंद्रीअपर्याप्तो १, असज्ञीपचेंद्रीअपर्याप्तो १, ए पाच अने सज्ञीपचेंद्रीअपर्याप्तो १, तथा सज्ञीपचेंद्री पर्याप्तो ए बे एव सात जीवना भेद छे सास्वादन गुणठाणे ते जा-णवा सहि चोथे समकित गुणठाणे सज्ञी पचेंद्री पर्याप्तो तथा अपर्याप्तो ए बे जाव भेद छे तथा देशविरति प्रमत्ते १ अ-प्रमत्तअपूर्वकरण, अनिवृत्ति बादर सूक्ष्मसपराय उपशातमोह क्षीणमोह सयोगीगुणठाणे अयोगीकेवळी ए अग्यार गुणठाणे १ पचेंद्रियपर्याप्तो जीवभेद छे

**सव्वगुणठाणमज्झे, सनामगुणठाणगचनेयव्व ।**
**अज्झवसायमसखा, सुहुमताइगेगचउचरिमे ॥३५॥**

टीका—सप्रतिगुणस्थानकेषुगुणस्थानान्याह ॥ सव्वगुणठा-णंति ॥ ३५ ॥ सर्वेषुगुणस्थानकेषुमध्ये स्वनामेनिस्वस्वकीयनाम-स्वनामएवगुणस्थानक स्वनामगुणस्थानक "नेअव्व" ज्ञातव्यमित्यर्थ यतोमिथ्यात्वेमिथ्यात्व एवगुणस्थानक "सासादन" सासादनमेव-गुणस्थानक मिश्रे मिश्रमेवगुणस्थानक एवमर्वत्रज्ञेयनत्र "सुहुमित्ति" सूक्ष्मसपराययावत् प्रत्येक एकैकस्मिन्गुणस्थानके मिथ्यत्व यवसा-यास्तीव्रतीव्रतरतीव्रतममदमदतरमदतमरूपा, परिणामभेदाअसख्ये

या सख्यातीतातेपा तत्रमिथ्यात्वेपितीव्रमदादिभेदेनअसख्येया परिणामा सति एवसास्वादनेपिसम्यक्त्वप्रतिपानन प्रथमसमयेअ पा सक्लिष्टाद्द्वितीयसमयेविशेषत सक्लिष्टा तृतीयसमयेविशेषतरसक्लिष्टा-श्चेपा नोविशुद्धाभवति शेषेपुगुणेषुराक्लिष्टा अप्पासर येपात्विशुद्धा अप्पसंसर येयाभवति सयमस्थानानामपिअसर येयत्व कषायक्षयोपशमन सयमश्रेणिन ज्ञेय । सयमस्थानेचारित्राविभागानापरस्थानपन्तित्वविज्ञेय, स्थानानाचतु स्थानिकत्वमेवसूक्ष्मसपरायपर्यन्त उपशातमोहक्षीणमोहसयोगिअयोगिगुणेचारित्रस्यैकैकमेवाध्यवसायस्थानमोहोदयाभावात्नाध्यवसायभेद उक्तचभगवत्या "निग्गथाणएगेसजमठाणेसणायाणएगेसजमठाणे" एप्वेरचतुर्पुनिजरास्थानानिअनेकानिप्रतिसमयमसर येयगुणनिर्जराधिकत्वात् प्रतिगुणस्थानकस्य "असखगुणनिज्झराजीवा" इतिवचनात् ॥ ३५ ॥

टवार्थ —सर्व चउद गुणठाणाने विषे पोताना नामनो तेहज एक गुणठाणो पामीये, जे कारणे मिथ्यात्वमा मिथ्यात्व गुणठाणो, सास्वादनमा सास्वादन गुणठाणो, एम सर्वेन जाणवो अने एक एके गुणठाणे तीव्रमदमदतरतीव्रतर परिणामभेदेअध्यवसाय असख्याता जाणवा एक मिथ्यात्व गुणठाणो पिण मिथ्यात्वनी तीव्रमदता अनेक प्रकारनी छे सास्वादनमे पिण तीव्र मदतानो प्रतिसमयीमेले एक समयना अध्यवसाय, असख्याता छे कषायना तीव्रमदता क्षयोपशमथी छे ते जानाइ कषायनो क्षयोपशम छे तासुधी अध्यवसायनो पण भेद छे एतले दशमा गुणठाणापर्यंत अध्यवसाय असख्याता छे तरतमयोग छे ते वली छठाण वर्डीया छे । इग्यारमाथी माडी उपरले च्यार गुणठाणे मोहनो उदय नथी तेमाटे चारित्रनो एक

अध्यवसाय छे । निर्ज्जरा थानकमे अनेक भेद छे, परचारित्रना थानकनो भेद नथी ॥ ३५ ॥

**मिच्छिदुगिअजय(यि)योगा, हारदुगुणाअपुव्वपणगेओ। मणवयउरलसविउव्वि, मिसिसविउव्व(व्वि)दुगदेसे।३६।**

टीका--अथगुणस्थानकेषुयोगान्निरूपयन्नाह। मिउदुगत्ति ३६॥ योगा पचदशधा तनमनोयोगश्चतुर्द्धा सत्यमनोयोग असत्यमनोयोग सत्यामृपामनोयोग असत्यामृपामनोयोग तत्स्वरूपचेद "सव्वाहीयासनामिह सतोगुणापयठावानि्ववरीपामोसामीसाजातदुभ(य)सहाव्वा १ अणहिगयाजाना सुविसुव्वुष्वियाकेवलिअसघमोसा एववाग्योगोपिचतुर्वाद्रष्ट्य । काययोग सप्तधा औदारिक औदारिकमिश्र, वैक्रियवैक्रियमिश्र, आहारकआहारकमिश्र, कार्मणचननौदारिककाययोगस्तिर्यग्मनुष्ययो तयोरेवापर्याप्तयो रौदारिकमिश्रकाययोग वैक्रियकाययोगोदेवनारकयोस्तिर्यग्मनुष्ययो वैक्रियलब्धिमतो वैक्रियमिश्रकाययोगोऽपर्याप्तयो देवनारकयोस्तिर्यग्मनुष्ययोर्वा वैक्रियस्यारभकालेपरित्यागकालेचआहारकचतुर्दशपूर्वविद आहारकमिश्रकाययोग आहारकस्यप्रारभसमयेपरित्यागकालेचकार्मणकाययोगोऽष्टप्रकारकर्मविकाररूप शरीरचेष्टास्वरूपोंतरालगतानुत्पत्तिमथमसमयेकेवलिसमुग्धातसमयेचयोगस्वरूपवस्तुत तत्त्वार्थटीकानोलिख्यते वीर्यांतरायक्षयोपशमजनितेनपर्यायेणात्मन सचवोयोग ॥ सचवीर्यप्राणोत्साहपराक्रमचेष्टाशक्तिसामर्थ्यादिशब्दवाच्य अथवायुनक्त्येनजीवेवीर्यांतरायक्षयोपशमजनितपयायमितियोग सचकायादिभेदत्रिविध तनकाय शरीरमात्मनोनानिवास पुद्गलद्रव्यचटत स्थविरस्यदुर्बलस्ययष्टयालबनयष्टिकादिवद् विषमेषुपद्याहकस्तद्योगाज्जीवस्यवीर्यपरिणामशक्ति सामर्थ्यंकाययोग यथाग्निसप

कात् घटस्मरक्तत्तापरिणाम तथा म त्र ज्ञापकरणस भ गर्द्धापर्यपरि-
णति न्यत्यात्मयुक्तकायायत्तावाग्वर्गणायोग्यरक्त ग्रशिसृज्यमाना-
वास्त्वेनकरणनामापद्यते तेनवाक्करणेनसंव ग मनोपर्द्धायसमुत्थान-
भापकशक्ति सत्यागयोग सत्यादिभेदयुक्तां तत्र अत्रपुद्गलात्मनो-
नसत्यादिभेदभाज किंतुज्ञानमेवसत्यादिभेदमुपयन तद्व्यवहारो-
तयापिनद्गलाश्रीनसाधकत्वमत्याद्भागपिसत्यादिभेदेनोपचर्यते तथा
आत्मनाशरीरसनारंभदेशेगृहितामनोवर्गणायोग्यस्कंधा मननार्थक-
रणभावमालम्बते तत्सहकृत्वादात्मन पराक्रमविशेषोयोग सत्यादि-
विकल्पाद्युतुच अत्रापिमनोवर्गणायोग्यस्कंधानसत्यादिव्यपदेशा
परमार्थत किंतुनोइन्द्रियावरणक्षयोपशमसमुद्भूतमनोविज्ञानपरिण-
तात्मनोवलाधानकारित्वादात्मसहचरितत्वाद्युपचारत सत्यादि-
व्यपदेश उदारप्रधानसहजावगाहनामहत्वादुदारा तीर्थकरादय-
स्तेषामिदमौदारिकं अथवा उदारम्प्रधानमोक्षसाधनरूपकार्यनिष्प-
द्यतेतस्माच्छरीरात् तद्धेतुमत्शरीरमौदारिकं विविधक्रियादृश्यादृश्य-
रूपकारणो वैक्रिय सूक्ष्मार्थग्रहणार्थतीर्थकरातिशयादिमहिमावलो-
कनार्थवाआह्रियतेइत्याहारक, सर्वकर्मप्ररोहबीज सांसारिकसुखदुःख
भाजनकर्मवर्गणानिष्पन्नकार्मण, अत्रकार्मणशरीरकर्मणोर्नपेक्षयवाह्या-
रतयागृहीतकार्मणवर्गणास्कंधा तेचशरीरत्वेनपरिणमतियेचाकर्मप्र-
कृतितयापरिणमतियेचात्मप्रदेशपरिणत्यायोगवीर्यणगृहीताकार्मणवर्गणा-
स्कंधाकर्मप्रकृतितयापरिणतास्तेकषायावलम्बनसापेक्ष स्थितिरसमा-
जोभवति येचशरीरतयापरिणतास्तेनैवनवास्थितिं भजन्ति पूर्वबद्ध-
स्थितिनिर्माणतिष्ठन्ति तेजसशरीरमाहारपाचनसमर्थनामिनवकर्मगृह-
णकारणतेननवभेदेनोपात्त,नवयोगस्थानपरिणतिनीयाविभागवर्गणा-
दिरूपपुद्गलवर्गणावलम्बिकरणवीर्यभावयोगयेनोत्पन्ने पर्याप्तिना-
मोदयागतमनोवाक्कायपर्याप्तिनिभागत मनोवाक्कायवर्गणा पूहचा-

(र्यायत्तप्रवात्तद्रव्य?)योगत्वेन यपदिश्यते तनपापात्विरत यहत्या-दियथार्थसत्य तद्विपरीतोऽसत्य पापनास्तिपरभवादिनास्तिर्दश्वरकृ-तजगदित्यादिउभयलक्षण स यानतोयथेमागावश्वरतिपुसामपितन-सभवात् उभयलक्षणायोगादसत्यानृतो यथाहेदेवदत्तग्रामगच्छेत्यादि एषनिविधोवियोगश्चलवीर्यवनाद्विविव दयादानपूजादिप्रवृत्त शुभ हिंसाग्तेयमैथुनेच्छादिप्रवृत्तोऽशुभइति "मिउदुगि"इत्यादिमिथ्याहृ-ष्टिद्विकमिथ्यादृष्टिसास्वादनलक्षणनत्रअयतेअविरतसम्यग्दृष्टौचेत्येन-गुणस्थाननयेआहारकद्विकोआहारककाययोगाहारकमिश्रयोगरहि-तास्त्रयोदशयोगा सभवति "आहारकदुगजायइचउदसपुविस्सेति" तेन तए तेषु तया अपूर्वपचकेअपूर्वकरणानिवृत्तिबादरसूक्ष्मसपरायो-पशातमोहक्षीणमोहलक्षणेनवयोगाभवति तद्यथा चतुर्विधोमनोयो-गचतुर्विधोवाग्योग औदारिककाययोगइतिनवशेषाअत्यन्तविशुद्धत-यातेषा वैक्रियाहारकद्विकारभाभावात् तयोश्चौत्सुक्यादिपरिणामपूर्वक-मेवसभवात् सर्वेक्रियादशयोगामिश्रे सम्यग्मिथ्यादृष्टिगुणस्थानके-चतुर्विधोमनोयोग चतुर्विधोवाग्योग औदारिकवैक्रियलक्षणौद्वौ-काययोगौएवदशयोगामिश्रेभवन्तिनशेषा तद्यथाआहारकद्विकस्या-सभव पूर्वाधिगमाभावात् कार्मणौदारिकवैक्रियमिश्राभावस्तुमरणा-भावात् अत्रचवैक्रियलब्धिमताअमिनवैक्रियारभकालेवैक्रियमिश्र-भवति तत्वकृताश्चित्कारणात्पूर्वाचार्यैर्नाभ्युपगम्यते तनसम्यगवग-च्छामस्तथाविधसप्रदायाभावात् देशेदेशविरतिलक्षणेगुणस्थानकेवै-क्रियवैक्रियमिश्रसहिताएकादशयोगाभवति यथाअवटस्येति ॥३६॥

टबार्थ —हवे गुणठाणे योग कहे छे मिथ्यात्व १ तथा सास्वादन एक तथा अविरति समकित १ ए तीन गुणठाणे तेर योग छे मनना ४ वचनना ४ औदारिकद्विक २ वैक्रिय-

द्विक २ कार्मण १ शेष १३ छे आहारक २ बे नही ते छठे गुणठाणे मुनिने होये, बीजाने न होये, अपूर्वकरणथी माडी ९ गुणठाणे खीणमोह पर्यन नवयोग पामीये मनना ४ वचनना ४ एक ओदारिक ए नवयोग छे पछे मिश्र गुणठाणे ए नव मध्ये वैक्रिय १ मेलीइ तेवारे १० योग छे इहा वैक्रियमिश्रनो अभाव छे, जे अपर्याप्तो अवस्थाए मिश्र गुणठाणो न होये अने वैक्रियलब्धि नवि करे तेहने पण मिश्र गुणठाणे लब्धि करे ते गवेषी नथी, विउव्विआहारगे उरलमिस्से इतिवचनात् ॥३६॥

**साहार(ग)दुगपमत्ते, तेविउवाहारमीसविणुइयरे ॥**
**कम्मुरलदुगंताइम, मयवयणसयोगिनअयोगी॥३७॥**

टीका—साहारगदुपमत्तेत्यादि ३७। पूर्वोक्तपंचैकादशयोगाःसाहारकद्विकाआहारकाहारकमिश्रयुक्ता त्रयोदशप्रमत्तेभवति, औदारिकमिश्रकार्मणाभावस्तुपूर्ववदेवतेएववैक्रियमिश्राहारकमिश्रविना एकादश इतरस्मिन्नप्रमत्तगुणस्थानकेभवति, वैक्रियाहारकमिश्रतुप्रारंभकालेलब्ध्युपजीवनतुऔत्सुक्यादिप्रमादेसप्रमेतुप्रमादाभावात् नेति "मायीविउव्वति नोअमायीविउव्वति" इत्यागमवचनात् तथाकार्मणऔदारिकद्विकऔदारिकमिश्रलक्षणअताद्यिमनसीसत्य १ असत्याअमृषारूपौमनोयोगौ एवमेवसत्य १ असत्याअमृषालक्षणौवाग्योगौचेतिसप्तयोगा सयोगिकेवलिनिभवति कार्मणौदारिकमिश्रतुसमुद्घातावस्थायामितिन अयोगित्ति नैवएकोपियोग अयोगिकेवलिनिइतिउक्ताःगुणस्थानेषुयोगा ॥३७॥

टबार्थ—देशविरति गुणठाणे वैक्रिय मिश्र मेलीये तेवारे ११ योग छे, मनना ४ वचनना ४ औदारिक १ वैक्रियद्विक

२ ए इग्यार योग होये प्रमत्त गुणठाणे आहारकद्विक २ भेळीइ तेवारे तेर योग पामीये प्रमत्त गुणठाणे ते मध्येथी वैक्रिय मिश्रआहारक मिश्र ए बे काढीये तेवारे सातमे अप्रमत्त गुणठाणे इग्यार योग होये, जे कारणे अप्रमत्त साधु लब्धी फोरवे नहीं तेम भगवतीसूत्रमा कह्यु छे, मापी त्रिउवत्तिनो अमायीविवत्ति ए वचन छे अने तेरमे सयोगी गुणठाणे कार्मण २ औदारिकमिश्र २ औदारिक २ मनना २ सत्यमनोयोग २ असत्यामृपामनोयोग इम वचनात् २ ए सातयोग पामीये ते मध्ये कार्मण १ औदारिकमिश्र १ ए बे योग समुद्घात करता पामीये अने अयोगी गुणठाणे योग नथी, योगनोरोध कर्यो छे ॥३७॥

**तिअन्नाण दुदसाइमेदुगे, अजयदेसिनाणदसतिग ॥**
**तेमिसिमीससमणा, जायाइकेवलदुगतदुगे ॥३८॥**

टीका—अथुनातेष्वेवोपयोगानभिधातुकामआह " तिअन्नाणचि ।३८। त्रयाणामज्ञानानासमाहारस्त्यज्ञानमत्यज्ञानश्रुताज्ञान, विभंगज्ञानरूप द्वयोर्दर्शनयो समाहारोद्विदर्शनचक्षुर्दर्शनाचक्षुर्दर्शनरूपमित्येते पचोपयोगा मिथ्यादृष्टिसास्वादनयोर्भवंति नशेषा "बेंदियस्सदोनाणाइकहलब्भंति भणइसासायणपडुच्चतस्सअपज्जत्तगस्सदोनाणाइ इतिप्रज्ञापनापेक्षया सासादनेज्ञानसूत्रेनेसमतमपिकर्मग्रथाभिप्रायेणसास्वादनस्यमिथ्यात्वाभिमुखत्वादनतानुबधिकषायोदयेयथार्थोपयोगमलीमसत्वेन तन्निबधनस्यज्ञानस्यापिमलीमसत्वादज्ञानरूपताइति । अत्रचिदर्शनाभावश्चविभंगेकातिचित्पर्यायज्ञानात् वपरीत्येनसामान्यावबोधरहितत्वात् । जीवाभिगमे । विभंगि-

नाअवधिदर्शनग्रहणेप्यननिषेधस्तेनपचोपयोगा सम्यक्त्वविरत्य-
गात्राद्यनशेषा तथा अपने अविरतसम्यग्दृष्टौ देशे देशविरतौ नाण-
दसणतिगति" मतिश्रुतावधिरूप ज्ञानत्रिक चक्षुअचक्षुअवधिदर्शन-
रूपदर्शनत्रिक एव षडुपयोगा नशेषा सर्वविरत्यभावात् एतेएवष-
डुपयोगामिश्रे अज्ञानसहितादृष्ट्या तत्रसम्यग्दृष्टित्व पतितानाआ-
सन्नाभ्यासत ज्ञानबाहुल्यपेचमिथ्यात्वतोमिश्रत्वगतानांआसन्नाभ्या-
सतो अज्ञानबाहुल्यइतितेनज्ञानाज्ञानेमिश्रजीवापेक्षयागृहीतेवस्तुत-
स्तुसम्यग्दृष्टेरेवज्ञानप्रमाणानि सशयत्वात्। अनविभगेअवधिदर्शनतत्
जीवाभिगमापेक्षया"समणाजयाद्दृति"इतिय यादीनाइत्यनेनप्रमत्ता-
प्रमपूर्वकरणानिवृत्तिबादरसूक्ष्मसपरायोपशान्तमोहक्षीणमोहलक्षणेषुस-
प्तगुणस्थानकेषुमन पर्यवयुक्ताइतिसप्तउपयोगा ज्ञानचतुष्कदर्शन-
त्रिकरूपाभवतिकेवलज्ञानकेवलदर्शनलक्षणोपयोगरूपउपयोगद्वयअ-
तिमद्विकेसयोगिकेवलीअयोगिकेवलीलक्षणचरमगुणस्थानकेद्विकेभ-
वति नशेषा अनमत्यादिज्ञानाना वस्तुस्वरूपात् आत्मनिकेवलज्ञान-
कालेपिमत्यावरणादीनाक्षयात् तद्ज्ञानानामपिनिरावरणत्वभवनात्
मत्यादीनामपिसत्वनयापि सवितुरुदयेतारकादीनासत्वेपितत्प्रभावात्
तथैवकेवलज्ञानस्यप्रकटमत्यादिप्रवृत्त्यभावात् "नट्ठम्मिछाउमत्थिए-
नाणेकेवलनाणेउवज्झइ" इत्यागमवाक्यात् यवहारनयेनछाद्मस्थिक-
ज्ञानाभाव तत्प्रवृत्यभावात् ॥ ३८ ॥

द्यार्थ —हवे उपयोग बार गुणठाणे कहे छे आदिम बे
गुणठाणे मिथ्यात्व सास्वादन ए बे गुणठाणे तीन अज्ञान बे
अचक्षुचक्षुदर्शन ए पाच उपयोग छे प्रथम बे गुणठाणे अ
विरति समकित १ तथा देशविरति ए बे गुणठाणे ज्ञानत्रिक
३ दर्शन ३ पहिला ए ७ उपयोग छे मिश्र गुणठाणे मिश्रित

उपयोग छे जे जीव तेह समकितथी पडि मिश्रे आवे तेहने पूर्वाभ्यास माटे ज्ञान होये, जे मिथ्यात्वथी आवे तेहने अज्ञान होये अने यति आदीदेइ छट्ठाथी बारमा गुणठाणा पर्यंत मन पर्यायज्ञान भेळीये एतले च्यार ज्ञान, तीन दर्शन, ए सात उपयोग होये अनद्दुग तेरमे चऊदमे गुणठाणे केवलदुग कहेता केवलज्ञान १ केवलदर्शन १ ए बे उपयोग होय ॥३८॥

छसुसव्वातेऊतिगं, इगछसु सुक्काअयोगिअलेसा।
इगचउपणतिगुणेसु, चऊतिदुइगपच्चओवधो ॥३९॥

टीका—उपयोगाउक्ता, अधुनागुणस्थानकेष्वेवलेश्याअभिधित्सुराह ॥ छसुसव्वाते ॥ ३९ ॥ षट्सुमिथ्यादृष्टिसास्वादनमिश्राविरतदेशविरतप्रमत्तलक्षणेषुसर्वा षटपिकृष्ण १ नील २ कापोत ३ तेज ४ पद्म ५ शुक्ल ६ लेश्याभवन्ति, ययप्यामि अविरतसम्यक्त्वपावदेवषड् लेश्याउक्ता साचप्रतिपद्यमानकापेक्षया, तेउतिग तेज पद्मशुक्ललेश्यालक्षणत्रिक इगिति एकस्मिन्प्रमत्तेभवति विशुद्धत्वात्षट्सुअपूर्वकरणादिसयोगिपर्यंतेषुशुक्लाएवभवति अयोगित्ति अयोगिन योगरहितत्वेनसिद्धा अप्ययोगिनएवेतितेअलेश्यालेश्यारहिता लेश्याचयोगप्रभवा तेननयोगरहिताना इहलेश्यानाप्रत्येकमसख्येयानिलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि ततोमदाध्यवसायापेक्षयाशुक्ललेश्यादीनामपिमिथ्यादृष्टया कृष्णलेश्यादीनामपिप्रमत्तगुणस्थानकेपिसभवोनविरुध्यते इतिनिर्देवमुक्तागुणस्थानकेषुलेश्या साप्रतबधहेतवोवक्तमारभ्यते मूलहेतवोचत्वार मिथ्यात्व अविरति कषाया योगाश्च तत्रमिथ्यात्व अयथार्थावबोधपूर्वकतत्त्वनिर्धाररूपतच्चपचप्रकार अभिगृहेणेद एव दर्शन शोभन-

नान्यदित्येवरूपेणकुदर्शनविषयेणानिर्वृत्तमाभिग्रहिकं यद्वशाद्बोटि-
कादिकुदर्शनानामन्यतमद्धठेनगृण्हाति तद्विपरीतमनभिग्रहिकं य-
द्वशात्सर्वाण्यपिदर्शनानिशोभनानीत्येवमीपन्माध्य स्थ्यमुपजायतेत-
दनभिग्रहिकम्, अभिनिवेशकृज्ज्ञात्वामिथ्याकदाग्रहरूपयथागोष्ठमा-
हिलादीनां सांशयिकंयच्छंशयेननिर्वृत्तयद्वशाद्भगवदर्हदुपदिष्टेष्वपि
जीवादितत्त्वेषुसंशयउपजायते तथानजानेकिमिदंभगवदुक्तं धर्मा-
स्तिकायादिसत्यमुतान्यथेति अनाभोगयदनाभोगेननिर्वृत्तशून्यतारूप
तच्चैकेन्द्रियादीनामितिपंचप्रकारमिथ्यात्वमिति द्वादशप्रकाराअवि-
रतिं कथमित्याह मन स्वात करणानिइन्द्रियाणिपंचतेषांस्वस्वविषये-
प्रवृत्तमानानां अनियमोऽनियंत्रण इत्यनेन रसनेन्द्रियाविरतौमृषावाद-
संग्रह मन स्पर्शनेन्द्रियाविरतौस्तेयोपदान सकलेन्द्रियाविरतौमैथु-
नस्यसंग्रह मनसअविरतौपरिग्रहाश्रव रसनेन्द्रियाविरतौरात्रिभोज-
नाश्रव तथाषण्णांपृथिव्यप्तेजोवायुवनस्पतित्रसरूपाणांयाचाहिंसारू-
पाअविरति षड्एवंद्वादशज्ञेया कष संसारस्यायः कषाय कषाय
सहचरितानोकषाया कषायतुल्याइत्यर्थ कषाया षोडशअनंता-
नुबन्ध्यऽप्रत्याख्यानप्रत्याख्यानसंज्वलनक्रोधमानमायालोभाख्यास्ते-
षांकषायाणांसदृशा कषायवर्तित्वेतीव्रमंदभेदात्वेनोकषाया हास्यर
त्यरतिशोकभयजुगुप्साख्रीपुनपुंसकरूपानवइत्येव पंचविंशतियोगा
पंचदशापूर्वंव्याख्यातस्वरूपाएवंमूलबंधहेतवश्चत्वार उत्तरत सप्त-
पंचाशद्भवति तन्मूलहेतुन्गुणस्थानेषुविभजयन्नाह इगत्ति एक-
स्मिन्मिथ्यात्वेगुणस्थानकेचत्वारोबंधहेतव अयमर्थ मिथ्यादृष्टि-
गुणस्थानकवर्तीजंतु ज्ञानावरणीयादिकर्मचतुर्भिर्मिथ्यात्वाविरति
कषाययोगलक्षणैश्चतुर्भि प्रत्ययैर्बध्नातिचतुर्षुसास्वादनमिश्राविरति-
सम्यग्दृष्टिदेशविरतरूपेषुमिथ्यात्ववर्जिताअविरतिकषाययोगलक्षणा-
स्त्रय प्रत्यया सतिभावनाचसास्वादनादिचतुर्षुगुणेषुवर्तमान ज-

तुरविरतिकषाययोगलक्षणैस्त्रिभिः प्रत्ययै ज्ञानावरणादिकर्मबध्नाति यद्यपिदेशेस्थूलप्राणातिपातविषमाविरतिरास्तिनयापिस्वल्पत्वान्नेहविवक्षिता सर्वविरताविवसर्वथाऽविरत्यभावइति पणत्ति पचसुगुणस्थानकेषुप्रमत्ताप्रूर्वकरणानिवृत्तिबादरसूक्ष्मसपरायलक्षणेषुद्वौप्रत्ययौकषाययोगामिख्यौयस्यसद्विप्रत्ययोबधोभवति इदमुक्तभवतिमिथ्यात्वाविरतिहेतुद्वयस्यैतेष्वभावात् शेषेणकषाययोगप्रत्ययद्वयेनामीप्रमत्तादय कर्मबध्नतिइतियावत् तथानिषुउपशातक्षीणमोहसयोगिकेवलिलक्षणेषुगुणस्थानकेषुएकएवयोगलक्षण प्रत्ययोयस्यसएकप्रत्ययोभवति एषुनिषुगुणस्थानेषुयोगप्रत्ययएवकर्मबध्नाति सातावेदनीयाख्यतदपिद्विसामयिकप्रकृतिप्रदेशलक्षणद्विविधबधकरोति । योगापयडिपएसठिइ अणुभागकसायाओइतिवचनात् अयोगिगुणे हेत्वभावान्नबधाभावइति ॥ ३९ ॥

टबार्थ —हवे गुणठाणे लेश्या कहे छे गुणठाणे मिथ्यात्वथी माडी छठा पर्यंत छ लेश्या छे सातमे अप्रमत्त गुणठाणे तेजो १ पद्म २ शुक्ल ए तीन लेश्या छे आठमाथी तेरमा पर्यंत छ गुणठाणे एक शुक्ल लेश्या छे अयोगी गुणठाणे लेश्या नथी लेश्या ते योगपरिणाम छे ते योग नथी ते माटे अयोगी ने लेश्या नथी ते योग विना होये नहीं हवे बध हेतु कहे छे तिहा मूल बधहेतु च्यार छे। मिथ्यात्व १ अविरत २ कषाय ३ योग ४ ए च्यार हेतु छे । ते हवे गुणठाणे कहे छे एक मिथ्यात्व गुणठाणे च्यार बध हेतु छे पछी सास्वादन १ मिश्र १ अविरति १ देशविरति १ ए च्यार गुणठाणे अविरति १ कषाय २ योग ३ हेतु ए तीन छे। पछी पण कहेता पाच गुणठाणे प्रमत्त १ अप्रमत्त १ अपूर्व-

करण १ अनिवृत्तिबादर १ सूक्ष्मसपराय १ ए पाच गुणठाणे कषाय तथा योग ए बे बन्ध हेतु छे। पछी तीगुणेसु कहेता तीन गुणठाणे उपशांतमोह १ क्षीणमोह १ सयोगीकेवली १ इणे तीने एक योग प्रत्ययीयो बन्ध हेतु छे ॥ ३९ ॥

**पणपन्नपन्नति(य)छहीय, चत्तगुणचत्तछचउदुगवीसा।**
**सोलस(दस)नवनवसत्त, हेउणोनउअयोगम्मि॥४०॥**

टीका—अथ गुणस्थानेपुत्तरहेतुनाह ॥ पणपन्नपतेत्यादि- मिथ्यादृष्टौआहारकशरीर आहारकमिश्रलक्षणमिश्रद्विता शेषा पचपचाशद्धेतव सति तेचामीपचमिथ्यात्वअविरतिद्वादश कषाय- पचविंशति योगास्त्रयोदश सास्वादनेपचमिथ्यात्वोना पचाशद्धे- तवोभवति मिश्रेत्रिचत्वारिंशद्धयहेतवोभवति औदारिकमिश्रवैक्रिय- मिश्रलक्षणमिश्रद्विककार्मणशरीर अननानुबधिनस्त्रिविनाइयमनभा- वना "नसम्ममिउोकुणइकालमिति" वचनात् सम्यग्मिथ्यादृष्टौ परलो- कगमनाभावात् औदारिकमिश्रवैक्रियमिश्रकार्मणअननानुबन्धुदया- भावात् अनतानुबधिचतुष्यनास्ति । अतएतेषुसप्तसुपूर्वोक्तापा पचाशतोऽपनीतेपुशेषास्त्रिचत्वारिंशद्धयहेतवोमिश्रेभवति । अविर- तौचपरलोकगमनसभवात् पूर्वोपनीतमौदारिकमिश्रवैक्रियमिश्रकार्म- णचपूर्वोक्तायात्रिचत्वारिंशतपुन प्रक्षिप्यते ततोअविरतेषट्चत्वा- रिंशद्धयहेतवोभवति "गुणचत्तेति" देशे देशविरत एकोनचत्वारिंश- द्धयहेतवोभवति, नसारायम‥पाअविरतिऔदारिकमिश्रकार्मणअप्रत्या- ख्यानचतुष्टयचेति ततनसासयमत्तु बहुच्छतकत्रूणात्वस्यसकपजत्र- साविरतिगमात् गृहि गामशक्यपरिहारत्वेनशक्यपरिहारत्वेनसत्यप्या- रभजत्रमाविरतौ तथापिनविवक्षिता कार्मणौदारिकमिश्रौतु विग्रहग-

त्यपर्याप्तावस्थायाचदेशविरत्यभावान्नसभवत द्वितीयकपायस्याप्य-भानुदयात् उक्तचावश्यकनिर्युक्तौ बीयकसायाणुदए अपच्चक्खाणावरणनामधेज्जाण देसविरइनउलहृति १ तदभावेएवतत्प्रादुर्भाव तत एवेसप्तपूर्वोक्ताया पदचत्वारिंशतोऽपनीयते तनएकोनचत्वारिंशद्वधहेतव शेषा देशविरतेभवति तथापड्विंशतिबधहेतव प्रमत्तेभवति इदमनहृदय प्रमत्तगुणस्थाने एकादशयाअविरति प्रत्याख्यानावरणचतुष्टयचनसभवति आहारकद्विकचलब्धुपयुक्तस्यसभवतिअत पूर्वोक्तापाएकोनचत्वारिंशत पचदशकेऽपनीतेद्विकेचतत्रमक्षिप्तेषड्विंशतिर्बंधहेतव प्रमत्तेभवति, तथाऽप्रमत्तस्यलब्ध्यनुपजीवनेनाहारकमिश्रवैक्रियमिश्रलक्षणद्विकरहिताश्चतुर्विंशतिबधहेतवो अप्रमादेगुणस्थानकेभवति, अपूर्वकरणेपुन सैवचतुर्विंशतिवैक्रियमिश्रलक्षणाद्विकरहिताद्वाविंशति बंधहेतवोभवति एतेपूर्वोक्ताद्वाविंशति हास्यरत्यरतिशोकभयजुगुप्सालक्षणारहिता षोडशअनिवृत्तिवादरेसभवति तेएवषोडशवेदत्रिकस्त्रीपुनपुसकलक्षणसज्वलननिकसज्वलनक्रोधमानमायालक्षणतेनविनादशबधहेतव सूक्ष्मसपरायेभवति तेएवदशलोभरहितानवबधहेतव उपशातमोहेक्षीणमोहेचभवति कपायोदयरहितत्वमेवानयो तथौदारिकद्विककार्मणसत्यमनोयोगअसत्याअमृपामनोयोग सत्यवचनयोग असत्याअमृषावचनयोग एवसप्तहेतव सयोगिनयोदशमेसभवति भावनाचऔदारिकतनुवर्तमानऔदारिकमिश्रतुकेवलिसमुद्घातद्वितीयषष्ठसप्तमसमये कार्मणतुसमुद्घातावसरेतृतीयचतुर्थपचमेमनोयोगावलननतुमन पर्यवज्ञानानाक्षेत्रान्तरस्थितानाकृनमश्नानाउत्तरदानकालेवाग्योगप्रवृत्तिस्तुप्रसिद्धैवन अयोगित्ति अयोगिगुणस्थानकेनसतिबधहेतवइति ॥ ४० ॥

टवार्थ —हवे गुणठाणे उत्तर हेतु छे ते कहे छे, ते मध्ये मिथ्यात्व गुणठाणे ते मिथ्यात्वना ५ भेद छे, अविरतिना १२ भेद छे, कषायना २५ भेद छे, योगना १५ भेद छे, एवं सर्व सत्तावन भेद छे ते मध्ये मिथ्यात्व गुणठाणे आहारक २ आहारकमिश्र नथी तेणे पचावन हेतु छे ॥ ५ मिथ्यात्व । अविरति १२, कषाय २५, योग १३ सास्वादन गुणठाणे पचास हेतु छे, पांच मिथ्यात्व नथी, बार अविरति, पचवीस कषाय, १३ योग पचास हेतु छे मिश्रगुणठाणे अनंतानुबंधी ४ औदारिकमिश्र १ वैक्रियमिश्र १ कार्मण १ ए सात काढीइ तेवारे अविरति १२, कषाय २१, योग १०, ए तेतालीस बंध-हेतु छे चोथे समकित गुणठाणे औदारिकमिश्र १, वैक्रियमिश्र १, कार्मण १ ए तीन मेलीये एतले अविरति १२, कषाय २१, योग १३, ए छेतालीस बंधहेतु छे पांचमे गुणठाणे अप्रत्याख्यानीया ४, त्रसनिअविरति १, औदारिकमिश्र १, कार्मण १, ए सात काढिइ तेवारे ओगणचालीस हेतु छे अविरति ११, कषाय १७, योग ११ छे, छट्ठे प्रमत्तगुणठाणे अविरति ११, प्रत्याख्यानीया ४, ए १५ काढीइ तेवारे आहारक बे मेलीये तेवारे छवीस हेतु छे तेर कषाय १३ योग, सातमे गुणठाणे आहारकमिश्र १ ए बे काढीये तेवारे चोवीस बंधहेतु छे आठमे गुणठाणे वैक्रिय १, आहारक १ ए बे काढीये तेवारे बावीसबंध हेतु छे नवमे गुणठाणे हास्य छ काढीइ तेवारे सोळ हेतु छे पछी दशमे गुणठाणे तीन कषाय तीन वेद काढीये तेवारे दश बंधहेतु छे पछी लोभ काढीये तेवारे इग्यारमे बारमे नव बंधहेतु छे, तेरमे गुणठाणे सात योगना हेतु छे, तथा अजोगीगुणठाणाने विषे हेतुबंध कोइ नथी ॥४०॥

**मिच्छेपणमिच्छता, अनिरइसमत्तवारअविरइओ ।**
**देसेतसवहहीणा, योगापुव्विंविनेयव्वा ॥ ४१ ॥**

टीका—अत्रवीर्यस्यशरीरपर्या- भाषापर्याप्ति मन पर्याप्ति उदयेनगृहीततद्वर्गणावलवित्वकायवाग्मनोयोगाइति चेतनावीर्यादीनामिथ्यात्वकषायेन्द्रियविषयोदय यासानातन्मया प्रवृत्ति मिथ्यात्वादिहेतव क्षयोपशमीभूतचेतनावीर्या दीना उदयाश्रितप्रवृत्ताना-हेतुत्व पपदेश मिथ्यात्वादीनाप्रकृतीनास्वोदयावृतसम्यग्दर्शनादिरूपाणाउदयत्व पपदेश यावत्कषायोदयस्तावस्थित्यनुभागबधौ यावद्योगप्रवृत्तिस्तावत्प्रकृतिप्रदेशबधौ ॥ उक्तच ॥ योगापयडिपएसठिई अणुभागकसायाओ इतिमिच्छाति मिथ्यात्वेपचमिथ्यात्वभेदा नोपरितनेष्वगुणेषुद्वादशअविरतय अविरतसम्यक्त्वयावत्लभ्यते देशविरतिगुणेत्रसवधरहिताएकादशअविरतय प्राप्यते नोपरिगुणेष्वयोगा पूर्वगुण २१ केषुउक्तास्तद्वदेवज्ञात या ॥ ४१ ॥

टवार्थ —मिथ्यात्व गुणठाणे पाच मिथ्यात्व छे, पछी मिथ्यात्व नथी अविरतसमकीत गुणठाणेसीम बार अविरति छे देशविरति श्रावकपणो प्रगटे, थूलप्राणातिपात विरमणव्रत लीधो तेहने त्रसनी हिंसा नथी इग्यार छे छ्डायी पछी अविरति नथी, योग ते पूर्वे कह्या छे तिम जाणवा ॥ ४१ ॥

**आइदुगेपणवीस, अणुतिणुइगतीसमीससम्मंमि ।**
**देसेसत्तरवियविणु, तिअविणुतेरसगुणतिममि॥४२॥**

टीका—कषायागुणेषुविभजयन्नाह आइदुगेत्ति॥४२॥आदिद्विकेमिथ्यात्वसास्वादनलक्षणेगुणस्थानद्वयेपचविंशतयएवकषाया.—

सति तथा मिश्रेसम्यक्त्वेचअनंतानुबंधिचतुष्टयरहिताएकविंशतिक-षायाभवति देशे देशविरताख्येसप्तदशकषाया द्वितीयाअप्रत्याख्यानक्रोधमानमायालोभरहितास्त्रयोदशकषाया गुणातिगाम्मिति गु-णनिकेप्रमत्ताप्रमत्तापूर्वकरणलक्षणेसति ॥ ४२ ॥

टबार्थ —आदि बे गुणठाणे पचवीस कषाय छे मिश्र गुणठाणे तथा समकित गुणठाणे अनंतानुबंधी च्यार विना एकवीस कषाय छे देशविरति गुणठाणे बीजा अप्रत्याख्यानी चोकडी विना सत्तर कषाय छे तीजी चोकडी विना तेर कषाय छट्ठे सातमे आठमे तीन गुणठाणे छे ॥ ४२ ॥

अछहासानवमेसग, वेयसजलणति(हीण)इगसुहुमे।
थोवुनसताखीणा, सखगुणापत्तपित्रसता ॥४३॥

टीका—अछहासाइति नवमेअनिवृत्तिबादरे सगत्ति सप्तहास्यषट्करहिताहेतव सति, वेदत्रिकसज्वलनत्रिकहीन इगत्ति एकएवसज्वलनलोभाख्यसूक्ष्मेसपरायेदशमेगुणस्थानेहेतु प्राप्यतेतत्र परकषायोदयाभावात् नैवकषायोदयइति ॥ उक्तंच ॥ हेतुस्वामित्व गुणस्थानकेषु सप्रतिगुणस्थानकेषुवर्त्तमानजंतूनामल्पबहुत्वमाह यो-वउवसतत्ति स्तोकाउपशांतमोहगुणस्थानवर्त्तिनोजीवा यतस्तेप्रविशन्त प्रतिपद्यमानकाएकस्मिन्समयेउत्कर्षेन चतु पंचाशत्प्रमाणा-एवप्राप्यते पत्तत्ति प्राप्ता स्तद्गुणस्थानवर्त्तिनस्तूत्कर्षेत शतपृथक्त्वप्रमाणा प्राप्यतेतेभ्य सकाशात्क्षीणमोहा सख्येयगुणापतस्तेप्रतिपद्यमानका एकस्मिन्समयेअष्टोत्तरशतप्रमाणालभ्यते तत्रस्था-स्तुउत्कर्षत सहस्रपृथक्त्वप्रमाणाएवअत्रनतुप्रतिसमयचतु पचाशद्उपशा तेअष्टोत्तरशतक्षीणप्रतिमानकभवतितर्हिअसख्येयसमयप्र-

माणाभ्याप्राप्तास्तयाउत्कर्षत असरयेया कथनभवतितन्नोच्यनेनै- वयत प्रतिपद्यमानकानाजवन्यन एकसमय उत्कृष्टन अष्टौसमया- एवप्रतिपद्यमानका प्राप्यते नापरेतन जघन्यनएक उत्कृष्टत सरयेयाअसरयेया समयाअतरभवति "बत्तीस" इत्यादि गाथा व्या- ख्यानेसिद्धदण्डिकासिद्धप्राभृतविशेषणवत्यादिषुज्ञेय तेनात्रसरयेयाए- वजीवानासरयेयइति । एतच्चोत्कृष्टपदापेक्षयोक्तमन्यथाकदाचिद्वि पर्ययोपिस्यात् कदाचित्स्तोका क्षीणमोहा बहवस्तुउपशान मोहा कदाचित्क्षीणमोहाएवनोपशाता कदाचिदुपशाताएवन- क्षीणा अनयो सानन्त्वादितिज्ञेयनयानेभ्य क्षीणमोहेभ्य सका- शात् ॥ ४३ ॥

टबार्थ —हास्य षटक विना नवमे अनिवृत्ति बादर गुणठाणे सात कषाय छे वेद ३ सज्वलन तीन उदयमायी गया एटले दशमे गुणठाणे एक कषाय छे पछी कषायनो हेतु अभाव छे हवे गुणठाणे अल्प बहुत्व कहे छे, सर्वथी उपशातमोह गुणठाणे वर्तमान जीव थोडा छे, जे ए गुणठाणे एकसमये उत्कृष्टा चोपन जीवनी प्रवेशना छे तेमाटे तेहथी क्षीणमोही जीव सख्यातगुणा छे जे इहा उत्कृष्ट प्रवेशना एकसोआठनी छे तेणे गुणठाणे प्राप्त जीव तथा पेसता जीव ए रीते छे ॥४३॥

**सुहमानियदिअपुवा, समअहिया सेणियुगलसुविसुद्धा।**
**उवसामगाकिलठा, जीवालभ्भंतितिगुणेसु ॥४४॥**

टीका—सूक्ष्मसपरायानिवृत्तिबादरापूर्वकरणवर्त्तिनोजीवाविशे- षाद्धि स्वस्थानेपुनश्चिन्त्यमानास्त्रयोपिसमास्तुल्याइतिकथमित्याह- एषुजीवास्त्रिप्रकारालभ्यते तेचश्रेणियुगला श्रेणियुगलस्थानोपशम-

श्रेणिस्था क्षपकश्रेणिस्थाश्चविशुद्धा इतिश्रेणिमारोहमाणा निमलनिर्मलतरपरिणामत्वात् सुविशुद्धाउच्यतेपुन उपशामका क्लिश्य सक्लिश्यमाना प्रतिपतन्तोऽप्यत्रप्राप्यते,उपशान्तमोहत प्रतिपातोद्विविध उपशान्ताद्धाक्षयात् तत्रएकान्तशान्त दशमेदशमात्रवमेनवमादष्टमेएवंयथानक्रमचतुर्थेतत्र साम्यादनेनत प्रथमेव्रजति यस्तुआयु क्षयात्पतनिसएकादशेमृत चतुर्थमेवगच्छति नान्य । इतिप्रतिपातेअपिउपशामकाजीवा लभ्यते एवंपुनिगुणस्थानेषु इति, ननुअविशेषोक्ता निमकारत्वेनकथनसरवेयगुणा यत अष्टोत्तरशतक्षपका विशुद्धा चतु पचाशदुपशामका विशुद्धा, पुन सक्लिश्यमानाउपशामकाअपिभवन्तस्तर्हिद्विगुणत्वेनसरवेयगुणा सभवति तत्कथमधिकाइतिउच्यते उपशामका पतन सर्वे क्रमेणपतन्ति केचिदुपशान्तेआयु क्षयेतत्र्यगुणनजनितेएतेएपुनप्राप्यते अतोद्विगुणत्वाभावात् अधिकायुक्ता ॥ ४४ ॥

टबार्थ —तेहथी सूक्ष्मसपराय तथा अनिवृत्तिबादर तथा अपूर्वकरण ए तीन गुणठाणे वर्तमानजीव तेहथी थोडले खीणमोहथी ए गुणठाणे माहोमाहे सम छे, अधिकार छे ए गुणठाणे उपशमश्रेणि चढता तथा पडता पामीये छे, माहोमाहे सम छे बराबर छे उपसमश्रेणि चढता क्षपकश्रेणि चढता ए बे ते शु विशुद्धजीव कहीये जे निर्मलपरिणाम छे, उपशमश्रेणिथी पडता ए गुणठाणे वर्तमानजीव पिण सक्लेशी कहीये जे शक्ति पल्टे माटे ए तीन गुणठाणे ए रीते जीव पामीये ॥ ४४ ॥

योगिअपमत्तइयरे, सखगुणादेससासणामीसा ।
अविरइअयोगीमिच्छा, असखचउरोदुवेणता ॥४५॥

टीका—इतितेभ्य सूक्ष्मादिभ्य सयोगिकेवलिन सरयातगुणास्तेषा कोटिपृथक्त्वेनलभ्यमानत्वात् प्रतिपद्यमानकास्तुअष्टोत्तरशत अस्मितेनप्राप्यमाणत्वात्तेभ्योऽप्यरत्तिप्रनियोगिन प्रमत्ता सख्येयगुणा प्रमादवतोनिर्ग्रंथानहव कोटिसहस्रपृथक्त्वेनप्राप्यमाणत्वात्, प्रमत्तयप्रतसज्ञिकर्मभूमिजमनुष्याणामेवयोग्यत्वात् सरयेयगुणत्वतेभ्य देशविरताजीनाअसख्येयगुणास्तिरश्चामप्यसख्यातानादेशविरतिभावात् तेभ्य सास्वादनाअसरयेयगुणा अनकदाचित्सास्वादना सर्वथनभवति यदाभवति तदाजघन्यत एकोद्वोचउत्कर्पतस्तुदेशविरतेभ्योप्यसरयेयगुणा चनसृषुगतिषुप्राप्यमाणत्वात् अनोपशमश्रेणित प्रतिपतितापेक्षयात्वसरयेय त्रासभवस्तथापिग्रंथिभेदसभवोपशमात्पतनोऽसख्येयाभवति, इदकर्मग्रथरहट्टीकानोज्ञेय तेभ्योपिमिश्राअसख्येयगुणा सास्वादनाद्वायाउत्कर्षत पडावलिकामानतयास्तोकत्वात्मिश्राद्धाया पुनरतर्मुहूर्त्तप्रमाणतयाप्रभुतत्त्वात् तेभ्योप्यसरयेयगुणाअविरतसम्यग्दृष्टय तेषागतिचतुष्टयेपिप्रभुतनयासर्वकालसभवात् तेभ्योप्ययोगिकेवलिन भवस्थाभवस्थभेदभिन्नाअनन्तगुणा सिद्धानामनतत्वात्, भवस्थायोगिनस्तुक्षीणमोहतुल्याएवतेभ्योऽनन्तगुणामिथ्यादृष्टय साधारणवनस्पतीनासिद्धेभ्योप्यनन्तगुणत्वात् तेषाचमिथ्यादृष्टित्वादिति तदेवमभिहितगुणस्थानवर्त्तिजीवानामल्पबहुत्वम् ॥ ४५ ॥

टबार्थ —तेहथी योगी तेरमा गुणठाणानाजीव सख्यातगुणा छे तेहथी इतर कहेता प्रमत्त गुणठाणाना जीव सख्यातगुणा छे ए सर्व गुणठाणे सन्निपर्याप्ता मनुष्य जीव पामीये छे, ते सख्यातगुणा छे तेमाटे तेहथी देशविरति असख्यातगुणा छे, तिर्यंच मनुष्य ए २ गतिना जीव पामीये छे, तेहथी सास्वा-

दन गुणठाणे जीव असख्याता छे, ए च्यार गतिमे पामीये तेहथी मिश्रगुणठाणे वर्नमान असख्यातगुणा छे, जे कारणे सास्वादनथी मिश्रगुणे रहेवानो काल घणो छे, तेहथी अविरति समकित गुणठाणे वर्तमान जीव असख्यात गुणा छे, जे एहनो उत्कृष्टकाल बासठि सागरोपम छे, तेहथी अयोगीजीव अनन्तागुणा छे जे सिद्ध अयोगी छे ते माहे गण्या छे, तेहथी मिथ्यात्वजीव अनतगुणा छे, जे निगोदीया सर्व मिथ्यात्वि ते सर्व गण्या छे, ए छ मध्ये च्यार सख्यातगुणा छे, अने बे बोल अनता छे ॥ ४५ ॥

**तिगपणचउतिगभावा, तिअट इग दोगुणेसुमुलिल्ला। अन्नाणस्सयउदओ, तिग धार गुणमिमयभेया ॥४६॥**

टीका—इहेदानीभावानास्वरूपकथयन्नाह ॥ भावाइतिभवनलक्षणा जतो परिणतिविशेषास्तेमूलन पच सान्निपातकस्तुमयोगजन्यत्वात् उत्तरोपिच्चार यामेदज्ञापनार्थपष्ठउक्त उपशमक्षायिकक्षायोपशमिकौदयिकपारिणमिकाश्चपच पष्ठ सान्निपातिकइतितनउपशमनउपशम कर्मणोऽनुदयावस्थाभस्मपटलच्छन्नाग्निवत् मोहनीयस्यकर्मण विपाकप्रदेशरूपनयाद्विविधस्यापिउदयस्योपशमनउपशम द्विविध, दर्शनचरणभेदान्तनानतानुबधिचतुष्टयदर्शनमोहनिकस्योपशमनाद्युपशमसम्यक्त्व अनकेचित् अनतानुबन्ध्युदयाभावनोऽशतश्चारित्रप्राकट्यमिच्छति तदसन् अनतानुबधिविगमेतुचारित्ररुचिरेवन चारित्रचारित्रमोहप्रकृतीगृहित तद्यात्मन स्थैर्यत्वव्वसकारित्वात्नगरद्वारपिधानवद्रोधकत्वाच्चचारित्रमोहोपशमनाद्युपशमचारित्रमिति तथानम्यात्यनाऽत्यय क्षय घातिकर्मप्रकृतीनायद्यद्-

गुणरोवकानासत्तानोसर्वथाक्षयेयन्निवृत्त दर्शनादिगुणरूपह स क्षायिक नवविध । यथाज्ञानावरणस्यसर्वथाक्षयेकेवलज्ञानजीवादिवस्तुन विशेषधर्मावबोधक दर्शनसमकक्षयेक्षायिकसम्यक्त्व तत्त्वरुचिरूपनिरतिचाररूपचारित्रमोहनीयक्षयेक्षायिकचारित्र सन्प्रवृत्तिरूपस्वधर्मैकत्वरूपस्थिरतास्वभावानुभवलक्षणमप्रतिपातिचारित्रदानांतरायादिक्षयेक्षायिकदानादिकपचप्रकारदानादिस्वरूपतुनिशेषावश्यकनोज्ञेय उदीर्णानाक्षय अनुदीर्णानामुपशम तेननिर्वृत्त क्षायोपशम भावनाचयतस्तत्राप्युदितक्षीणअनुदितचोपशांतमित्यमोच्यते क्षयोपशमेवुदयोप्यस्तिप्रदेशनपाककर्मणोवेदनानुज्ञानात् नत्वसौगुणविघातायभवतिविपाकवेदनतुनास्येति, उपशमेतुप्रदेशकर्मापिनानुभवति क्षयोपशमेतुप्रदेशवेदनसद्भाव तेनक्षयोपशमेननिर्वृत्त क्षायोपशमिकोभाव तस्यभेदाअष्टादश, ज्ञानचतुष्टयअज्ञानत्रयदर्शनत्रय क्षयोपशमिदानादिपचक क्षयोपशमसम्यक्त्व देशविरति सर्वविरति क्षायोपशमिकाइत्येवमष्टादश क्षयोपशमसम्यक्त्वादयोहितद्विघातकप्रकृतिप्रदेशोदयेनसातिचारनाभवति कर्मणामुदयेननिर्वृत्त औदायिकस्तच्च एकविंशतिप्रकार अन्नाणमसिद्धत्तादसयमलेसाकषायगईवेआ मिछमित्यनोच्यते कर्मणामष्टानाहाविंशशतनप्रकृत्युदयोदय सएवएकविंशतिप्रकारेकथसगृहीतदुच्यते अज्ञानग्रहणात् ज्ञानदर्शनावरणदर्शनमोहनीयानासग्रह गतिग्रहणान्शेषनामगोत्रवेदनीयायुषिवाक्षिप्तानि भवधारणकारणत्वादेपाकर्मणामितिलिंगग्रहणात्हास्यादिग्रह शेषौदयिकस्यासिद्धत्वेसग्रह , ननुचकर्मप्रकृतिभेदानाद्वाविंशत्युत्तरशतप्रकृतिगगनयाप्रसिद्धमाम्नायेनचतनवेछया परिपठितास्तदेतत्कथमुच्यतेउच्यतेनामकर्मणिमन पर्याप्तिनामपर्याप्तिश्चकरणविशेषोयेनमनोयोग्यान्पुद्गलान्आदायचिंतयत्विति चमन्यमाना पुद्गला सहकरणान्मनोयोगउच्यतेमनोयोगपरिणामश्चलेश्या,

अत मन पर्याप्तासगृहीतत्वादितिज्ञेय एकेंद्रियादीनाभावयोगापेक्षयालेश्या जोगप्पभवालेश्याइति पचमागवचनात् पारिणामिकस्त्रिभेद जीवत्वभ यत्वअभ यत्त्वभेदात् जीवभावेजीवत्व जीवत्वग्रहणेनअजीवत्वादीनामग्रह भ यासिद्धिर्यस्यासौ भ य भ य एवभ यत्व अभ य सिद्धिगमनायोग्य कदाचिदपियोनसेत्स्यत्यभव्यएवत्वभ यत्वइतित्रिपचाशद्भेदा उत्तराज्ञेया । भावानामिति तिगपणइति भावाइतिपदसर्वनयोज्य तिगभावा पणभावाचउभावानिगभावाएवतिअडत्तिगुणेसुपदसर्वत्रयोज्य तिगुणेसुइत्यनेनत्रिगुणेषुमिथ्यात्वसास्वादनमिश्रलक्षणेषु त्रिगभावाइतिसत्रय त्रयोभावा क्षायोपशमौदयिकपारिणामिका तत्रक्षयोपशममत्यज्ञानादिक औदयिकमनुष्यगतिमिथ्यामोहमिश्रमोहलक्षणपारिणामिकजीवत्वादिएवज्ञेयअष्टसुगुणेषु अविरतसम्यक्त्वदेशविरतप्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिबादरसूक्ष्मसपरायोपशातमोहरूपेषु "पण भवति"पचापिभावा सभवति तेचानेकजीवापेक्षयाकस्यचित् जीवस्यक्षायिकसम्यक्त्वोपशमचारित्रवत् एकस्यापिपचभावा सभवति क्षपकश्रेणौतुचत्वारएवभावा तस्योपशमाभावात् "दुगत्ति" एकस्मिन्क्षीणमोहलक्षणेगुणस्थानेचउभावाचत्वारोभावाउपशमरहिताभवति "दोगुणेसु" द्वयोर्गुणयोरित्यर्थे द्विवचनेबहुवचनमाकृतत्वात् सयोगिकेवलिअयोगिकेवलिगुणयो त्रिगभावा त्रयोभावा क्षायिकौदयिकपारिणामिकयुक्ता भवति मूलिल्लाइतिदेशीवचन मूलाएवेति अत्राशयभेददर्शयन्नाह अन्नाणरासत्ति अज्ञानत्वक्षयोपशमभावेप्युक्त पुनरौदयिकेभावेअज्ञानस्योपादानअनक मतिविशेष उच्यते मत्यावरणादीनाक्षयोपशमेनअवबोधेजातेपिमिथ्यात्वोदयात्विपर्यासअयथार्थज्ञानअज्ञान तच्चक्षायोपशमिक उपयोगस्यतदावरणकर्मक्षयोपशमोत्पन्नत्वात् विपर्यासश्च मिथ्यात्वसहकारात्यत्पुन अन्नाणतद्यज्ञानावरणोदयेनसर्वथाज्ञान-

स्यआवरणरोव अत्यनावरो रूपअज्ञाण तत्औदयिकभावेज्ञान-भ्यवेनअज्ञाणस्सइतिअज्ञानस्योदय निगगुणम्मि निघुमिथ्यात्वसा-स्वादनमिश्रलक्षणेषुअस्ति केचित् पुन केचित्सूक्ष्म यार याकरणक्त-शला क्षीणमोहपर्यंतेअज्ञानस्योदयमिन्डन्ति ज्ञानावरणादर्शनावर-णकर्मोदयावत यावनुज्ञानदर्शनचेतनाशनावत् अज्ञाणतच्चकेवलज्ञा-नप्राकट्येएवसर्वचेतनाप्रागभावस्ततनावा रूअज्ञानसभवइतिदि-गूपत्राअनसप्रमति तच्चतेषामेवप्रमदति मयमेअस्ति नैगमनयमते-सम्यग्ज्ञानेजातेक्षायोपशमिकज्ञानस्यविपर्यासाभावात् सम्यक्त्वेना-ज्ञानइति एवमूलमतेतुसर्वयाज्ञानावरकपटलाभावेएवअज्ञाणाभाव-इतिस्वयउह्यम ॥ ४६ ॥

टबार्थ —हवे भाव कहे छे तिहा मूल भाव पाच छे उपशम भावना २ भेद छे उपशमसमकित, उपशमचारित्र क्षायिकभावना ९ भेद छे क्षायिकसमकित १ क्षायिकचारित्र १ केवलज्ञान १ केवलदर्शन १ क्षायिकदानादि ५ लब्धिक्षयोपशम भावना भेद १८, उपयोग १० दानादिलब्धि ५ क्षयोपशमसमकित १ देशविरति १ सर्वविरति १ एव १८ औदयिकभावना भेद २१ अज्ञाणअसिद्धत्व १ असयम १ लेश्या ६ कषाय ४ गति ४ वेद ३ मिथ्यात्व १ एव २१ पारिणामिक भावना भेद ३ भव्यत्व १ अभव्यत्व १ जीवत्व १ ए तेपन्न उत्तर भावना भेद थया हवे गुणठाणे मूल भाव कहे छे मिथ्यात्व १ सास्वादन १ मिश्र १ ए तीन गुणठाणे क्षयोपशम १ उदय १ पारिणामिक १ ए ३ भाव छे समकितथी माडी इग्यारमा पर्यंत आठ गुणठाणे पाच भाव छे एक क्षीणमोहे उपशम विना च्यार भाव छे सयोगी केवली अयोगी केवली

गुणठाणे क्षायिक १ औदयिक १ पारिणामिक १ ए त्रीन भाव छे औदयिक भावनो भेद जे अज्ञान केइ आचार्य नो तीन गुणठाणा सीम माने छे केटलाएक आचार्य ज्ञानावरणी दर्शनावरणीनो उदय तेहने अज्ञाण कहे छे ते माटे बारमा गुणठाणासीम एहनो उदय माने छे जे क्षीणमोहने अते ए खपे अज्ञान ३ लीधा ते क्षयोपशमभावना भेद छे, ते विपर्यासयुक्त जाणवा अने औदयिक मध्ये जे अज्ञाण ते जे अजाण्यो भाव कह्यो ते ज्ञानावरणीना उदय तेहनो भेद औदयिक भावमा कह्यो छे ॥ ४६ ॥

चउदुगदुगपणचउतिग, तीसातीसासगठदुगवीसा।
वीसगुणवीसतेरस, बारसभावा गुणठाणे ॥ ४७ ॥

टीका—अथगुणस्थानेषु उत्तरानिप भावभेदान् यथायोगविभजयन्नाह ॥ चउदुगति अवतीसाइनिपदानूसारन चउतीसाइति- प्रथमेमिथ्यात्वेगुणस्थानकेचतुस्त्रिंशद्भेदाभावानाभवनि अवक्षयोपशमस्यअज्ञाननिक चक्षुर्दर्शनद्वय इनिपचक अवधिदर्शन विभंगेअधिकृनमपिकर्मग्रथे नाधिकृत अज्ञाणदुदसाआइमदुगेइतिवचनात् दानादिलब्धिपचक एव १० दशौदयिकस्यैकविंशानि परिणामकस्यत्रयोपिएवचतुस्त्रिंशद्भेदामिथ्यात्वेभवति "दुगतीसत्ति" सास्वादनेद्वात्रिंशद्भेदा भावाना क्षयोपशमस्य ते एव दश १० औदयिकस्यमिथ्यात्वरहिताविंशति २० पारिणामिकस्य अभव्यत्वरहितौ द्वौअभव्यत्वमिथ्यात्वएवसभवात् एवद्वात्रिंशति पुन दुगतिसत्ति मिश्रेद्वात्रिंशत्ताएसास्वादनेनोक्ता अनकेचितृमिथ्यात्वस्यातेमिश्रोदयेन त्रयोस्त्रिंशदिच्छन्ति तदपिसम्मत, तथापिगाथायामिश्रमोहस्य-

सग्रहात् नेह व्यारयात केचित् ते मीसिर्मीसइति वचनमाल्कय सप्त-त्रिंशद्भेदा मिश्रे वन्ति, तदप्यपेक्ष्यमेव यत श्रुतसम्यग्दर्शनाना-नज्ञान नादसणिरसनाणमिति उत्तरा यपनवास्याऽज्ञेय, अनोद्गत्रिंश-द्भेदाएव अविरतसम्यग्दर्शनगुणे "पणतीसत्ति" पचत्रिंशद्भेदा भा-वाना,तत्रोपशमसम्यक्त्व १ क्षायिकसम्यक्त्व १ क्षयोपशमेतुक्षयो-पशमसम्यक्त्व १ ज्ञानत्रयदर्शनत्रय ६ दानादिलब्धिपचकइति-द्वादश १२ अज्ञानमिथ्यात्वरहिताएकोनविंशतिरौदयिकस्य, अभ-व्यत्वरहीनौद्वौपारिणामिकस्य, एवपचत्रिंशद्भेदाभवति अत्रौदयिके-मिथ्यात्वस्यस्थाने केचित्सम्यक्त्वमोहोदयक्षिपति तदपिसम्मतमिति देशविरतिगुणे "चउतीसत्ति" चतुस्त्रिंशद्भेदाभवति,तत्रोपशमसम्यग्-दर्शन १ क्षायोपशमस्य द्वादश ता एवदेशविरतिमिलनेत्रयोदशऔ-दयिकस्य,देवगतिनरकगत्यपगमेसप्तदशपारिणामिकस्य,द्वौइतिप्रमत्ते "तिगतीसत्ति" प्रमत्तेत्रयस्त्रि शद्भेदाभावानाभवति, तत्रपूर्वोक्ताया चतुस्त्रिशत देशविरति रसयमतिर्यग्गतिश्चापनीयते पुन मन पर्यवज्ञानसर्वविरति क्षिप्येते तदात्रयस्त्रिंशद्भेदा प्राप्यते, अप्रमत्तेइति-तथाऽप्रमत्तेसप्तमेगुणस्थानेत्रिंशद्भेदा भावाना, अत्रकृष्णनीलकापोत-इतिलेश्यात्रयाभावात्त्रिंशदिति, सगद्वउगवीसत्ति सप्त तथा अष्टे पदान्विंशतिसप्त इत्यनेनअपूर्वकरणेसप्तविंशति भावभेदाइति, अत्रतेज पद्मलेश्याक्षयोपशमापगमेसप्तविंशति , उपशमचारित्रेक्षिप्ते अष्टाविंशति , कर्मप्रकृतिकारस्तु उपशमचारित्रउपशातमोहेएवइ-च्छति, चारित्रमोहनीयप्रकृतीनावेद्यमानानानोपशम किंतुश्रेणाव-पिउपशमकएवगृहीतद्र", भावत्रिभग्यातुकडेइति यापात्, उपशा-मकस्तुउपशातइतिग्रहणेनगृहीतनदपिदेशमानमिति, दशमेसूक्ष्मस-परायगुणस्थाने " दुगवीसत्ति " द्वाविंशतिर्भेदाभावानाभवति, यतश्चवेदत्रिकसज्वलनत्रिकस्यानुदयेशेषा द्वाविंशति भवति, तत्रो-

पशमद्विविधक्षायिकदर्शन १ क्षयोपशमस्यज्ञानचतुष्टयदर्शननिक सर्वविरति ८ दानादिपंचकइतिनयोदशद्वेपारिणामिकामनुष्यगति-सञ्ज्वलनलोभशुक्लेश्या सिद्धत्वरूपाऔदयिकाद्इतिद्राविंशति, उपशातमोहेतुलोभकषायक्षायोपशमिकसर्वविरत्यभावान्नविंशतिभेदाभवति, क्षीणमोहे " गुणवीसत्ति " एकोनविंशति भावानामेदाभवति, तेचउपशातोक्ता विंशते उपशमभेदद्विकापगमेक्षायिकचारित्रेक्षिप्तेभवति, सयोगिगुणस्थानके " तेरसत्ति " त्रयोदशमेदा भावानाभवति, तेचनत्र क्षायिकोनवत्वा मनुष्यगति १ शुक्लेश्याऽ सिद्धत्वचौदयिक जीवत्वचपारिणामिकमितित्रयो दश यत प्रज्ञापनायाकेवलिन किंभव्या किंवाअभव्याइतिप्रश्ने नोभवानोअभवाइत्युक्तत्वादिति, अयोगिगुणस्थानके बारसत्तिद्वादशभावा भवति शुक्लेश्यापगमात् अलेश्यत्वेनचास्येति, सिद्धानातुक्षायिक भेदा जीवत्वपारिणामिकमितिदशभावाभवति यद्यपिक्षायिकभावभेदनवकेतुघातिकर्मक्षयसमुत्थानामेवगुणानाग्रहण तथाप्यघातिक्षयसमुत्थानातयाशेपसकरादिगुणानातुपारिणामिकेएवसग्रहइतिपचसग्रहटीकाशय इतिव्याख्यातागुणेपूत्तरभावभेदा ॥ ४७ ॥

टबार्थ —मिथ्यात्व गुणठाणे चोवीस भाव छे क्षयोपशमना १० औदयिकना २१ पारिणामिकना ३ सास्वादन गुणठाणे बत्तीस भाव छे क्षयोपशमना १० औदयिकना मिथ्यात्वना विना २० पारिणामिकना अभव्यपणा विना २ एव ३२ मिश्रगुणठाणे बत्तीस भाव छे, क्षयोपशमना १० औदयिकना २० मिथ्यात्व विना पारिणामिकना २ अभव्य विना, समकित गुणठाणे पात्रीस भाव छे उपशम समकित १ क्षायिक समकित १ क्षयोपशम समकित १ ज्ञान ३ दर्शन ३ दानादि ५ औदयिकना अज्ञान १ मिथ्यात्व १ विना ओगुणीस, पारिणामिक

२ एव पार्नीस भाव छे देशविरति गुणठाणे चोर्त्रीस भाव छे ए पार्नीसमायी औदयिकनी गति २ नीकली क्षयोपशमनो देशविरति १ मेलवीये एव चोर्त्रीस छे छठे प्रमत्त गुणठाणे तेत्रीस भाव छे देशविरति १ असयम १ तिरिगति १ ए तीन निकल्या मन पर्यवज्ञान सर्वविरति ए वे मेल्या तेवारे तेत्रीस, अप्रमत्त गुणठाणे त्रीस भाव छे लेश्या तीन नीकली, तथा अपूर्वकरण गुणठाणे सत्तावीस भाव छे, तेजो १ पद्मलेश्या २ नीकल्या क्षयोपशम समकित १ ए एक नीकली तेवारे सत्तावीस छे तेमध्ये उपसमचारित्र १ मेलीये तेवारे नवमे गुणठाणे अठावीस भाव छे इहा कम्मपयडिमध्ये उपशमचारित्र इग्यारमेज गरोव्यो छे पछे वेद ३ सज्वलन ३ ए छ काढ्या तेवारे दशमे बावीस भाव छे इग्यारमे गुणठाणे वीस भाव छे खीणमोह गुणठाणे उपशमना २ काढीये क्षायिकचारित्र ए एक मेलीये तेवारे ओगणीस भाव छे सयोगि गुणठाणे क्षायिकना नव मनुष्यगति १ शुक्ललेश्या १ असिद्धत्व १ जीवत्व ए तेर भाव छे अयोगि चउदमे गुणठाणे शुक्ललेश्या विना १२ भाव पामीये, सिद्ध जीवने क्षायिकना नव, जीवपणो पारिणामिकनो ए दश भाव छे ए दशमे आत्मधर्म छे ए गुणठाणे भाव कह्या ॥ ४७ ॥

**सम्मत्ताओ पचसु, उवसमसमतिगेसुचरणयु(जु)अ।**
**सम्माइ(यण)सुसतेपुण, खायगसमत्तगा हुति॥४८॥**

टीका—अथगुणस्थानेषुभावानामल्पानित्वमुच्यते सम्मत्ताओ-इति सम्यक्त्वात्पचसुअपूर्वकरणपर्यंतेषुगुणस्थानेषु उपशम-

सम्यग्दर्शनप्राप्यते " त्रिगेसु " त्रिकेषु नवमेदशमेएकादशे "चरणयुत" उपशमचारित्रयुत, इत्यनेनउपशमदर्शन उपशमचारित्र एवभेदद्वयप्राप्यते पुन सम्यग्दर्शनादिउपशममोहयावत् क्षायिक सम्यग्दर्शनभवति यश्चैकचत्वारिंशत्सत्ताकस्तस्यक्षायिकसम्यक्त्व-प्राप्यतेइति ॥ ४८ ॥

| गुण | भाग | उप | क्षयो | क्षायि | औद | पारि |
|---|---|---|---|---|---|---|
| मि | | ० | १० | ० | २१ | ३ |
| सा | | ० | १० | ० | २० | २ |
| मि | | ० | १२ | ० | १९ | २ |
| अ | | १ | १२ | १ | १९ | २ |
| दे | | १ | १३ | १ | १७ | २ |
| प्र | | १ | १४ | १ | १५ | २ |
| ऽप्र | | १ | १४ | १ | १२ | २ |
| ऽप्र | | १ | १३ | १ | १० | २ |
| ऽनि | | २ | १३ | १ | १० | २ |
| सू | | २ | १३ | १ | ४ | २ |
| उ | | २ | १२ | १ | ३ | २ |
| क्षी | | ० | १२ | २ | ३ | २ |
| स | | ० | ० | ९ | ३ | १ |
| अ | | ० | ० | ९ | २ | १ |

टवार्थ —सत कहेता उपशमश्रेणिवतने समकितथी मांडी इग्यारमा गुणठाणा पर्यंत कोइक जीवने क्षायिकसमकितपणे होवे जे एकसो एकतालीस सत्तावालो जीव श्रेणि उपशमचारित्रे

